कासि सुन्दरि चिकीर्षसि किंवा हेतिभिर्वद जिघांससि कांवा
त्वद्गुणश्रवणजात्म भुवाहं प्रेषितस्तु विभुना महिषेण॥७॥

किमुचिवानित्याह कासीति हे सुंदरि त्वं का असि किंनाम्नी किं जातिरसीत्यर्थः अथ च किं कर्त्तु मिच्छसि तथा एभिः हेतिभिः शस्त्रैः कांहंतु मिच्छसि इति वद ननु यदि ब्रूयाः त्वं किमर्थं पृच्छसि स्वार्थं परार्थं वेत्याह अहंतु महिषेण प्रेरितस्त्वां पृच्छामि नत्वे तादृशे दौत्यकर्मणि प्रेरितै रपि बुधैर्न प्रवर्तितव्या मित्याह कीदृशेन महिषेण विभुना प्रभुणा प्रभुणा माज्ञाह्य विचार्यै वावश्यं कर्तव्येति भावः अनेनतत्प्रभावोपि सूचितः ननु किमर्थं तेनमां प्रति प्रेषितो सीत्याह पुनः कीदृशेन तेन तव गुणानां श्रवणेन जातः आत्मभूः कामो यस्य त्वांदारान् कर्त्तु मिच्छतीतिभावः पुष्पधन्वा रति पतिर्मकर ध्वज आत्मभूरित्यमरः ॥ ७ ॥

यो भुनक्ति भुवनत्रय राज्यं मृत्यु रप्यथ बिभेति यतोसौ
सोपिते सुदतिलिप्सति दास्यं किं त्वया परमतः स्पृहणीयम्

पुनरपित प्रभातिशयं दर्शयति य इति यः महिषः भुवनत्रयस्य राज्यं स्वयमेव भुनक्ति अनेन तदैश्वर्य्यं सूचितं यतःमहिषात् असौ मृत्युरपि बिभेति अनेनतस्य शौर्य्य प्रतापश्च सूचितः हे सुदतिसः ईदृशगुण विशिष्टोपि महिषः तव दास्यं लिप्सति वांच्छति अतः परं त्वया किं स्पृहणीयं अस्ति ॥ ८ ॥

तन्मदीय मुररी कुरु वाक्यं भोक्ष्यसे हरिहरा ननु भूतान् तेन
सार्द्ध मतुलानथ भोगां स्त्वद्धिताय हि मयेद मिहोक्तम् ॥ ९ ॥

तदिति तस्माद्धेतोःमदीयं वाक्यं स्वीकुरु स्वीकृते च तेन महिषेण सार्धं हरिहरा दिभि रपि अननु भूतान् अतुलान् भोगान् भोक्ष्यसे नत्व स्मित्वर्थं तव किं से त्स्यतीत्याह इदं वचः तस्मो कारुरुपं इह तव हितार्थ मेव मया उक्तं तवैव कार्यं सेत्स्यति नममेति त्वयि जात कारुण्ये नैव मयोच्यते इति भावः ९॥

इत्युदीर्य विरतं बहुधा तं चाटुतां बहुविधा मपहाय
सस्मितं वदति सा स्म च तथ्यं निर्भयो गदति नैव मृषा यत्॥१०

इतीति अमुना प्रकारेण बहुधा उदीर्य उक्त्वा विरतं तं मंत्रिणं प्रति सा भगवती सस्मितं यथास्यात्तथा तथ्यं वचः वदति स्म किं कृत्वा बहुविधां चाटुतां तद्वत्पारं जनाय मिथ्याभियुक्तवचनचातुरीं अपहाय त्यक्त्वा यत् यस्मात् निर्भयो जनः मृषा मिथ्या नैव गदति ॥ १० ॥

मंत्रिवर्य्य जननीं जगतां मां प्रार्थितां सुरवरै रिह विद्धि
नोचिरा द्युधि निहन्मि हयारिं स्वर्गिणो निजपदे ष्वभियोक्तुम्

किं वदति स्मेत्यपेक्षायां त्वं कासि किं चिकीर्षसि हेतिभिस्त्व कं जिघांससीति तत्प्रश्नानां क्रमेणोत्तरं ददावित्याह मंत्रिवर्य्येति हे मंत्रिश्रेष्ट मा जगतां जननीं मूलप्रकृतिं विद्धि जानीहि अनेन महिषस्य स्त्री भवेति तदुक्तवचोपि तिरस्कृतं कोदृशीं मां इह अस्मिन्महिषवधरूपे ऽर्थे सुरवरैः ब्रह्मादिभिः प्रार्थितां सा अहं नोऽचिरात् शीघ्रमेव हयारिं महिषं युद्धे निहन्मि किं कर्तुं स्वर्गिणः इंद्रादिदेवान् तेनापहृतेषु निजनिजपदेषु अभिषेक्तुम् ॥ ११ ॥

ब्रूहि तन्निजपतिं पतितं तं शीघ्र मेत्य कुमतिं वचसा मे
चेज्जिजीविषसि सद्म वले स्त द्याहि वा युधि यमस्य मदस्त्रैः १२

ब्रूहीति तस्मात् इतः शीघ्रं एत्य गत्वा पतितं पापिनंकुमतिं नष्टवुद्धिं च निजपतिं महिषं ममैव वचसा ब्रूहि किमित्याह हे महिष चेद्यदि त्वं जीवितुमिच्छसि तर्हि वत्सेःसप्तपातालं प्रतियाहि अथ चेत्कश्चन हृदि वलावलेपोऽस्ति तर्हि युधि ममास्त्रैः यमस्य सद्म मंदिरं प्रतियाहि अन्यथा ऽवश्यमेव त्वां घातयिष्यामीति भावः ॥ १२ ॥

पुच्छिनी न च विषाणवती वा तादृगस्मि यदमुं पशु मीहे ।
चेद्भवानपि भवेन्मदुवाङ्नो भसम्सादिह त्वगैव करोमि १३

ननु तादृशं चक्रवर्तिनं किं न स्वीकरोषीत्याह पुच्छिनोति हे मंत्रिन् अहं तादृक् यादृशोः असौ महिषः तादृशो पुच्छवती नास्मि तथा विषाणवती शृंगिण्यपि नास्मि यद्यस्माद्धेतोः अमुं पशुं अहं ईहे वांच्छामि इत्युक्त्वा तदवज्ञां संस्मृत्यातिरुष्टा तं प्रत्युवाचेत्याह हे मंत्रिन् चेद्यदि भवानपि कोमलवक्ता न भवेत् तर्हि इह दृशैव त्वा मयुक्तवादिनं भस्मसात् करोमि त्वया अयुक्तमुक्तं परं मृदुवाक्यं मिश्रितं अत स्तवनाशो न कृत इति भावः ॥ १३ ॥

इत्युदीरित मथो स निशम्य स्वर्गिमातुरतिमंतुमदुग्रम् ॥
प्रत्युवाच रुषतीं गिर मीषद्रोषपाटलिमजुष्ट दृगेताम् ॥ १४ ॥

इतीति स मंत्री स्वर्गिणां देवानां मातुः भगवत्याः इत्यमुना प्रकारेण अतिशयेन मंतुरपराधो विद्यते यस्मिन् तत् तथा अत्युग्रं उदीरितं वचः निशम्य-श्रुत्वा एतां प्रतिरुषतीं अकल्याणीं गिरं उवाच कीं० मंत्री ईषज्जातरोषेण पाटलिम्ना ईषद्रक्ततया जुष्टे दृशौ यस्य श्वेतरक्तस्तुपाटलइत्यमरः रुषती वागकल्याणीति च ॥ १३ ॥



चंडि यत्प्रलपितं हि भवत्या वेद्मारण्यरुदितं निखिलं तत्
क्वाबला प्रकृतिभीरुरहो त्वं कासरः क्व च तृणीकृत कालः १५

किमुवाचेत्याह चंडीति हे कोपशीले यत् भवत्या प्रलपितं अनर्थमुक्तं तत्सर्वमपि अरण्यरुदितं वेद्मि यथा निर्जने रोदनं साध्यंतराभावान्निष्फलं भवति तद्वत्त्वद्वचोपीत्यर्थः कुतो निष्फल मित्याह अहो आश्चर्ये त्वं अबला नामत एव बलहीना स्त्री क्वासि कीदृशी प्रकृत्या स्वभावेनैव भीरुर्भयशीला अथ कासरः महिषः क्वास्ति कीं० तृणीकृतः कालो येन अतो युद्धे महदंतरमिति भावः तत्सरस्वतो तु प्रत्युतस्त्रीति हे चंडि भगवति यत्त्वया तेन सह युद्धं करोमीत्युक्तं तत्सर्वमपि निष्फलं जाने अत्र हेतुः अहो आश्चर्ये त्वमबलानास्ति बलसमोऽन्यो यस्या स्तादृशी तथा प्रकृति मूलप्रकृतिरपि भीरुः स्वेच्छयाद्भुत संदरस्त्रीरूपा क्व अथ च तृणीकृतः त्वदग्रे तुच्छीभूतःकालःकृष्णवर्णस्य महिषः

कास्ति त्वया सह स युद्धं कर्तुं न समर्थ इत्यर्थः विशेषात्त्वंगनाभीरु रित्यरः विषमालंकारः ललायो महिषोवाहद्विषत्कासरसैरिभा इत्यमरः ॥ १५

**किं त्वया न समरं क्व च दृष्टं मन्यसेथ नलिनीभ्रमणं किम् ।**
**किं तु यौवनमदेन धृतास्त्रां त्वां विचारविधुरां मह मूहे ॥१६॥**

किमिति प्रश्ने संशये च हे चंडि त्वया समरं युद्धं न कुत्रापि दृष्टमिति जाने कस्माच्चियुद्धं इति नामैव श्रुत्वा त्वया स्वस्मिन्नितरव्यवहारवदवगतं न तु साक्षाद्दृष्टमित्यर्थः अथवा तद्युद्धं किं नलिनोभ्रमणं मन्यसे यथा करे कमलं भ्रामयसि तथा युद्धमपि किं क्रोडा प्रायमेव जानासीति भावः युयुत्सायामेतद्धेतुद्वयमपि निरस्य स्वमतमाह किंत्वेतत्कारणमस्ति यौवनस्य मदेन धृतान्यस्त्राणि यया तादृशो त्वां विचारेण युक्ता युक्तविवेकेन विधुरां रहितां अहं ऊहे तर्कयामि कस्माच्चिदस्त्राणि गृहीत्वा त्वयि मदोद्रेको जातः परं मोच एवेति भावः ॥ १६ ॥

**केवलास्ति रसभंगजभी र्मेपत्युरप्यथ न मेस्ति निदेशः**
**नेति चेदह मिहैकक एव त्वां कचेषु विनिगृह्य नयामि ॥१७॥**

नन्वेतच्चेत्तर्हि त्वं किं न बलात्मां नयसीत्याह केवलेति हे देवि मम तु केवला रसस्य शृंगारस्य भंगात् भीरस्ति एतां चेद्बलान्नयामि तर्हि रसभंगो भवितेति भयान्ननयामीति भावः अथ च मम पत्युः महिषस्यापि एतादृशः आज्ञानास्ति सामपूर्वमेव त्वया नेतव्या नतु बलेनेति तेनाज्ञप्तत्वात् चेद्यदि इति बलाद्ग्रहण प्रतिबंधि हेतुद्वयं न स्यात् तर्हि अहं एक एव त्वां केशेषु गृहीत्वा नयामि तत्रेति शेषः ॥ १७ ॥

**अब्रवी दथ पुन र्जगदंबा सत्य मेव निखिलं य दवोचः ।**
**नास्ति मे बलसमो यदिहान्यो विद्धि मां तदबलां वरदूत १८**

अब्रवोदिति अथेत्युक्त्वा जगदंबा पुनः अब्रवीत् हे वरदून विरुद्धलक्षणया हे नीचदूत यत् त्वं अबलासीत्यादि अवोचः कथितवानसि तत्सर्वं सत्यमेव

यत् यस्मात् इह लोके मम बलसमः अन्यः कोपिनास्ति तत्तस्मान्मां अबलां विद्धि नास्ति बलसमोऽन्यो यस्याः सेत्यर्थं जानीहि न तु बलहीनेति भावः॥१८

नो मयापि समरं क्व च दृष्टं कोपि यत्प्रतिभटो न मदग्रे।
लीलयैवहिनिहन्म्यियतोरीन्युद्धमस्ति नलिनीभ्रमणं तत्॥१९॥

यत्तु त्वयोक्तं किं त्वया न समरं क्व च दृष्टमन्यसेथ नलिनोभ्रमणं कि-मति तदपि सत्यमेवेत्याह नोइति हे दूत मया समरमपि कुत्रापि न दृष्टं कुतः यस्मात् ममाग्रे प्रतिभटः कोपिनासीत् मत्त,त्वस्यान्यस्या भावात् अथ च हे दूत यतो ऽहंलोलामात्रेणैव अरीन् निहन्मि तत्तस्मान्मदग्रे युद्धं नलिनीभ्र-मणमेवास्ति न तु महद्भातीत्यर्थः॥ १९ ॥

नास्मि विस्मृतमते वनिताहं नो पुमानपि च सत्य मवेहि।
त्वत्पतिः पशुरसाववलातो मृत्यु मैहतविधेर्बहुतप्त्वा ॥२०॥

ननु वनितायां त्वय्यसंभाव्य मेतदित्याह नास्मीति हे विस्मृतमते नष्ट बुद्धे अहं वनिता नास्मि तथा पुमानपि नास्मि एतत्सत्यं जानीहि यद्वा मां सत्यात्मकं परं ब्रह्म जानोहि तर्हि वनिता किमर्थं जानासीत्याह हे दूत असौ त्वत्पतिः महिषः पुराबहुतप्त्वा तपः कृत्वा ब्रह्मणः सकाशात् स्त्रीतः स्वमृत्युं अकांक्षत अत एव पशुः अन्यथा को बुधः स्त्रीतः स्वमृत्युं याचेत॥ २० ॥

तत्कृतेहमथ वासवमुख्यैः प्रार्थिता विरभवं वनितात्वम्।
आत्मनः प्रकृतिचारु विधाय स्वेच्छया कुहकवद्विभुशक्तिः॥२१

तदिति तदर्थं तेन ब्रह्मणा दत्तवरसाफल्यार्थं अहं इंद्राभिर्देवैः प्रार्थि-ता सती प्रकृत्यैव चारु आत्मनः स्वस्य वनिता त्वं विधाय आविरभवं तर्हि पर प्रेर्यतापत्ति रित्याशंका निरासायाह स्वेच्छयेति ननु शुद्धः सन् स्वेच्छया कोवाशुद्धिं कांक्षते इत्याह कुहकवदिति यथा नटः अनासक्त एव स्वेच्छया सिंहादिर्भवति तथा ममाप्यत्र न कश्चिदभिनिवेशोस्तीति भावः कुत इद

मित्याह कीदृशी अहं विभुः सर्वत्रानुस्यूता शक्तिःसामर्थ्यं यस्याः यद्वा विभोः परमात्मनः शक्तिः तद्रूपेवेत्यर्थः शक्ति शक्तिमतोरभेदात् ॥ २१ ॥

किंबहुप्रलपनैस्त्वरितं तत्सज्जितं कुरु पतिं तमुपेत्य।
तत्कलेवरजरौधिरधाराः पक्षिणामिह पिपासति संघः॥ २२

किमिति हे मंत्रिन् बहुभिः प्रलपनैः व्यर्थवचनैः किमस्ति न किंचिदपी त्यर्थः तत्तस्मात् शीघ्रं न स्वपतिं महिषं प्राप्य सज्जितं कुरु हि यत इह तच्छ रीरजन्याः रुधिरस्यधाराः पक्षिणां काकगृध्रादिपक्षिणां मदीय बाणानां वा संघः पिपासति पातु मिच्छति पक्षो श्येने रथे कांडे शरे खड्गे च पक्षिणोति विश्वः॥ २२ ॥

इत्यतीव परुषं स तयोक्तः प्रारुहद्द्विविधसंशयदोलाम्।
किं नयामि बलतः पति मेतां यास्युताक्षतकृतिर्गतलज्जः २३

इतीति इत्यमुना प्रकारेण तया देव्या अतिनिष्ठुरं यथा स्यात्तथा उक्तः सः मंत्रीप्रतिद्विविधां संशयरूपां दोलां प्रारुहत् द्वैविध्यमेवाह एतां देवीं किंवलात् किं पतिं नयामि तर्हि अनायासेन नैतत्कार्यं मिति भयं उत असंपा दितकार्यः सन् गतलज्जः तं प्रति यामि ॥ २३ ॥

तावदेत्य महिषाय समस्तं वृत्त मेव कथयामि विचित्रम्।
इत्यसौ हृदि विचिंत्य जवेनोपेयिवानभितमुज्झितरोचिः२४

अथ किंनिश्चिकायेत्याह तावदिति आदौ तत्र गत्वा इदं विचित्रं अभूत पूर्वं समस्तं वृत्तांत मेव महिषाय कथयामि असौ मंत्री इति हृदिविचिंत्य त्यक्त शोभः सन् वेगेन तं महिषं प्रति प्राप्तवान् ॥ २४ ॥

सोभिवाद्य जगदीशं नाथ सास्ति चात्र जगतो विपरीता।
यत्तया परुष मुक्त मिदं मह्यं गत्वं न गदितुं पुरतस्ते॥२५ ॥

स इति अथ सः मंत्री तं जगदीशं महिषं नमस्कृत्य जगाद हेनाथ सा देवी जगतो विपरीता अनन्यसाधारण सौंदर्यो पेतास्ति अष्टादशभुजादि मत्तया

वा विलक्षणास्ति अथ तया किमुक्त मित्याह हे नाथ तया यत् निष्ठुरं वच उक्तं तदिदं वक्तुं तत्राग्र मम वाक् समर्था नास्ति ॥ २५ ॥

सम्यगिर्वाह हिताय नियुक्तैः स्वामिने ऽथ भृतकै र्भणनीयम् ।
त्वं तु मर्हसि ततस्तु मृषोक्तंनो हितं भवति चारु वचो यत् २६

तर्हि न वाच्य मित्याह सम्यगिति हि यतः स्वामिना स्वहितार्थं कार्येषु नियुक्तैःसेवकैः स्वामिने सत्यमेववाच्यमितिनीति विदुक्तिः तत्तस्मात् वक्ष्यमाणं वचः परुषमपि त्वंतु अर्हसि मधुरं किं ते ब्रूष इत्याह हि यतः मिथ्याभिहितं मनोहरं वचःपरिणामे स्वामिनो हितकृत् न भवति मधुरौषधवदितिभावः२६

सा विभाजगदपूर्वसुरूपा ऽष्टादशोज्ज्वलभुजा कलितास्त्रा ।
धोरणीकृतमहाहरिगेंद्रा मन्यते ननिजतः परमन्यम् ॥ २७ ॥

इति युक्त्या स्ववचनयोग्यतां प्रतिपाद्य तदुक्तिं निवेदयितुं तावत्तत् स्वरूप माह सेति हे विभो सा देवी जगतः अपूर्वसुरूपा अस्ति अनेन तत्सौन्दर्यं प्रतिपादितं तथा अष्टादशमिताः उज्ज्वलाः भुजा यस्याः तथा तेषु भुजेषु कलितानि गृहीतानि अस्त्राणि यया तथाधोरणी कृतः वाहनीकृतः महा सिंहो यया स एतादृशो निजतः स्वस्मात् अन्यं कमपि परं उत्कृष्टं न मन्यते स्वात्मानमेव परं जानातीत्यर्थः ॥ २७ ॥

सामपूर्व मुदितापि मया सा तप्तसर्पि रिव सिंचितमद्भिः ।
प्रत्यु तज्ज्वलितवत्यतिरोषादित्यु वाच धुरि मां च निषण्णम् २८

सामेति सा देवी मया सामपूर्वं उक्तापि जलैःसिंचितं तप्तघृतमिव प्रत्युत अतिकोपात् ज्वलितवती अथ च अग्रे स्थितं मां इति वक्ष्यमाणं उवाच ॥२८॥

ब्रूहितं यशु मितो वचनान्मे चेज्जिजिविषसि गच्छततोऽधः
युद्धमेहि यदिवाप्य ह मन्त्रे त्वां यमातिथि मिहाद्य करोमि २९

किमवोचेत्याह ब्रूहीति हे मंत्रिन् इतो गत्वा मम वचनात् तं पशुं महिषं ब्रूहि से महिष यदि त्वं जीवितु मिच्छसि तर्हि अधः पातालं प्रतिगच्छ यदि

वा कश्चिन्नाभिमानोस्ति तर्हि युद्धं प्राप्नुहि इह च अहं एकैव अस्त्रैः त्वां यमस्थानिथिं गतप्राणं अद्य करोमि ॥ २९ ॥

नूत्नमित्यभिभवं परिशृण्वन्नात्र हेतुमधिगत्य च मत्या ।
पृच्छतिस्म सचिवानथ मुख्यान्सादरं स महिषोदरदूनः ॥३०॥

नूत्नमिति अथ सः महिषः इति नवीनं पूर्वं केनचिदपि न कृतं तिरस्कारं परिशृण्वन् सन् अत्र च तिरस्कारे स्वबुद्ध्या हेतुं नाधिगत्य अथ तन्निश्चयार्थं मुख्यान् निज मंत्रिणः सादरं यथा स्यात्तथा वक्ष्यमाणं पृच्छतिस्म को० महिषः दरेण भयेन दूनः दुःखितः ईषद्दुःखितो वा ३० ॥

अत्र मे भणत हेतु ममात्याः स्वस्व बुद्धि मनुसृत्य यथावत् ।
चित्रमस्ति यदियं प्रमदा मां योद्धुमाह्वयति हेतिभिरुच्चैः ३१

किं पप्रच्छेत्याह अत्रेति हे अमात्याः अत्रास्मिन्कार्ये स्वस्वबुद्धिं अनुसृत्य यथावत् मह्यं हेतुं भणत कस्मिन्कार्ये इत्याह हे मंत्रिणः एतन्महच्चित्रमस्ति यत् इयं मेकापि काचन प्रमदा मां शस्त्रैः योद्धुं उच्चैः आह्वयति अत्र को हेतुरित्यर्थः ॥ ३१ ॥

इत्थमर्वरिपुणाथ निदिष्टा वर्चसा च वचसा च वरिष्ठाः ।
तत्क्षणस्फुरणशालिधियस्ते स्वामिनंप्रति पृथक्पृथ गूचुः ॥ ३२

इत्थमिति अथ अर्वरिपुणा महिषेण इत्थमाज्ञप्तास्ते अमात्याः स्वामिनं महिषं प्रति पृथक् पृथक् ऊचुः को० ते वर्चसा तेजसा वचसा च वरिष्ठाः तथा तत्क्षणप्रश्नश्रवणाव्यवहितोत्तरकाले एव उत्तरदानाय स्फुरणशालिन्यो धियो येषां ते ॥ ३२ ॥

अब्रवीदथ विरूपदृगेवोपेक्षयेषदवधूय करास्यम् ।
किंबिभेति भुवनत्रय जिष्णु र्जिष्णुजि द्भवानपि नार्य्याः ३३

अब्रवीदिति अथ तावत् विरूपदृक् विरूपाक्षनामा मंत्री एव तं प्रति अब्रवीत् किं कृत्वा अहो किमिदं महत्कार्य मित्युपेक्षया करं आस्यं च ईषत

अवधूय कंपयित्वा अन्योन्य,पेक्षया हस्तं मुखं च किंचित्कंपयति कमब्रवी-
दित्याह हे राजन् त्वं खड्गभाग् भवन्नवयजयन शोलापि तया इंद्र जेतापि
सन्नार्या सकाशात् किं बिभेति अनुचित ं तदित्यर्थः करास्य मिति
प्राण्यंगत्वादेकवद्भावः ॥ ३३ ॥

देव केय मवला स्ति वराकी किं त्वयाणु रचलो क्रियतेऽहो।
तद्वचोभि रपि नेहि भयं यस्मात्सानृतजुषो खिलयोषः ॥३४

दवेति हे राजन् इयं वराको तुच्छा अवला कास्ति न कापीत्यर्थः अहो
आश्चर्यं त्वया अणुः परमाणु रपि किं अचलो क्रियते स्वापेक्षया परमाणु रूपा
मप्येतां पर्वतरूपां जानामीत्यर्थः ननु अणुरूपा चेदियं तर्हि किं प्रतिभट-
वद्गर्जतो त्याह हे राजन् तस्याःनिष्टु,रै र्वचोभि रपि भयं न प्राप्नुहि कुत इत्याह
यत्‌यस्मात् सर्वा अपि स्त्रियः साहसं अविचार्यकारित्वं अनृतं असत्य वक्तृ
त्वं च जुषंतोति तां इत्यः संति वाचैव तासां शूरता नतु बलेनेति भावः ।३४

तां तु यौवन मदेन वलंतो वालुकां रविकरै रिव मन्ये।
धूलि मेव पुन रप्यहमेकः सैंहिकेय इव तां प्रकरोमि ॥ ३५ ॥

अस्ति चेत्किंचिद्बलं तथापि तत्प्रतीकार महमेवविधास्यामीत्याह
ता मिति हे राजन् तां तु यौवनस्य मदेनैव वलंतों प्रकाशमानां अहमन्ये-
का मिव रविकरैः वालुकां सिकतामिव यथाधूलि रपि सिकता सूर्यकिरणैः
रजतवत् प्रकाशते तथा निर्बलापि सा यौवनमदेन बलवतो वभातो त्यर्थः अथ
अहमेक एव सैंहिकेयः राहु रिव तां पुनर्धूलि मेव प्रकरोमि यथा राहुणा-
च्छादिते रवौ प्रकाशमानापि सिकता पुनर्धूलि रेव जायते तथा मया तस्या
यौवनमदे भग्ने कृते पुनः सा निर्बलैव भविष्यतोतिभावः ॥ ३५ ॥

पश्य मे वल मतर्क्य मिदानीं ता मुपेत्य तरसा युधि राजन्।
संनियम्य सुदृढा यसपाशै रानयामि भवदंतिक मेव ॥३६ ॥

स्वपराक्रमं दर्शयति पश्येति हे राजन् इदानी मम वलं अतर्क्यं पश्य कि-

मित्याह अधुनैव तरसा वेगेन तां युधि प्राप किं च सुदृढैः लोहमयैः पाशैः संनियम्य बद्ध्वा तव समीप मेव नयामि ॥ ३६ ॥

**इत्यतीव परुषास्य रूक्षोक्ति र्नो प्रभो रभिमता रसभंगात् ।**
**चेतसेति स विमृश्य बभाषे दुर्धर स्तदनु तं दनुसूनुः ॥ ३७ ॥**

इतीति तदनु तस्य विरूपाक्षस्य कथनानंतरं दुर्धरो नाम दनुसूनु इति चित्तेन विचार्य तं महिषं प्रति बभाषे इति किं अस्य विरूपाक्षस्य इतीयं क्रोधेन युक्ता तिनिष्ठुरा उक्तिः प्रभो र्महिषस्य अभिमता नेति जाने कुतः रसस्य शृंगारस्य भंगात् नाशात् रस वार्त्तात्र युक्ता न तु रस भंग वार्त्तेत्य-तोरसवार्त्तां वच्मीति भावः ॥ ३७ ॥

**हे रसेश भवता किमदृष्टा विस्मृताः किमथ मन्मथचेष्टाः ।**
**व्यंग्यभाव मुदितं न य दस्या स्त्वद्विमर्शपदवी मधि रूढम् ॥ ३८ ॥**

किं भवाषे इत्याह हे इति हे रसायाः भूम्याः ईशराजन् यद्वा रसस्य शृंगारस्य ईशनायक त्वया कामस्य चेष्टाः वक्रोक्त्यादयः किं अदृष्टाः अननुभूताः यद्वा दृष्टा अपि किं विस्मृता जाताः कुत इद मुच्यत इत्याह यत् यस्मात् व्यंग्यो गूढो ऽभावो ऽभिप्रायो यत्र तादृशं अस्या देव्याः उदितं वचः तव विमर्श पदवीं न अधिरूढं त्वं न विचारयसीत्यर्थः ॥ ३८ ॥

**यत्तया गदित माशु पृषत्कैर्हृद्विदार मिह तं खलु हन्मि ।**
**विद्धि तद्धनन मत्र कटाक्षैः कामिमानसविदारणदक्षैः ॥ ३९ ॥**

ननु किं तया व्यंग्य मुदित मिति त्वमेव कथयेति स्वय मेवाभिव्यंजयति यदिति हे राजन् तया यत् गदितं अहं शीघ्रं तं महिषं हृदयं विदार्य इह बाणैर्हन्मि तत्तु अत्र हननं कटाक्षैर्जानीहि स्त्रीणां हि कटाक्षा एव शरा भवंति ननु तेषां हृद्विदारणशक्तिः कास्तीत्याहको०कटाक्षैःकामिनां मानसस्य विदारणे दक्षैः चतुरैः तदुक्तं कालिदासेन इयं व्याधायते बालाभ्रूरस्या कार्मुकायते कटाक्षाश्च शरायंते मनो मे हरिणायते इति ॥ ३९ ॥

पातयामि युधि यच्च तयोक्तं तत्त्ववेहि शयनीय निपातम् ।
युद्धमत्र तु नखानखिदंतादंति विद्धि विविधं स्मरजन्यम् ॥४०॥

नन्वेतत्तु संपन्नं परन्तु यत्तयोक्तं तं युद्धे निपातयामि तत्किमित्याह पातयामीति हे राजन् यच्च तयोक्तं तं महिषं युधिपातयामि तत्तु शयनीये रतिकाले शय्यायां निपातं जानीहि अत्र युद्धं तु स्मरजन्यं विद्धि कीदृशं नखैः नखैः प्रहृत्येदं युद्धं प्रवृत्त मिति कृत्वति नखानखि तथा दंतैर्दंतैः कृत्वति दन्तादंति युद्धं वृत्तं तेन तेनेदमिति सरूपेति समासः अन्येषामपि दृश्यते इति पूर्वपदस्य दीर्घः इच्कर्मव्यतिहारे इतोक्समासांतः तिष्ठद्गुप्रभृतीतिचेत्यव्ययम् एवं प्रकारेण विविधं हस्ता हस्त्यादिकमस्ति ॥ ४० ॥

एतयाथ दभाणी गतासुं तं करोमि तदपीति विमृश्यम् ।
वीर्य्य मेव हि जनेष्वसुभूतं निसृते निरसुता न किमस्मिन् ४१

ननु यत्तयोक्तं तं गतप्राणं करोमि तत्किमित्याह एतयेति यत्तु एतया अभाणि कथितं तं महिषं गतप्राणं करोमि तदपि त्वया इतिविचार्यं इतिकिं सर्वेष्वपि जनेषु वीर्यमेव प्राणरूपमस्ति अथास्मिन् वीर्ये निसृते सति किं गत प्राणतानस्यात् स्यादेवेत्यर्थः ॥ ४१ ॥

इत्थमप्यपरमानवतीनां संश्रुतान् पुरुवचांसि मयेश ।
मत्समःस्मररहस्यरसज्ञः कोपि नास्ति जगतीह यदन्यः ॥४२॥

अथ किं त्वयाद्यैवेदमुदीर्यते उत पूर्वमप्यनुभूत मितत्राह इत्थ मिति हे ईश इत्थं अमुनैव प्रकारेण अपरासामपि मानवतीनां भूयांसि व्यंग्यवचनानि मया पूर्वमपि सम्यक् व्यंग्योद्घाटनपूर्वकं श्रुतातिकुत इत्याह यत् यस्मात् इह जगति मत्समःअन्यः स्मरस्य रहस्यं गूढ भावं रसं च जानातीति तादृशःकोपि नास्ति अहमेवात्रातिनिपुणोस्मीत्यर्थः ॥ ४२ ॥

मां हि निर्दिश तदत्र विभो त्वं तां करोमि भवताशु सनाथाम् ।
चेतसा द्रुपद पीह भवेद्यामन्मदुक्तिभि रनंगवशे स्यात् ॥ ४३ ॥

अथैवं सतो किं विधेय मित्याह मा मिति हे विभो तत्तस्मात् अत्र कार्ये मा मेव विद्धि त्वयि का शक्ति रित्याह अोऽहमव तां देवीं भवता त्वया सनाथां करोमि तव महिषीं करोमीत्यर्थ: नन्वीदृशो दृढनिश्चया कथमधीनतां भजिष्यतीत्याह इह लोके या स्त्री चित्तेन दृशत् पाषाण दृढनिश्चयाऽपि स्यात् सापि मन्मथोमत्तोक्त भ: कामाधीना स्यात् तर्हि किमियं भङ्गुर निश्चयेति भाव ॥ ४३ ॥

इत्युदीर्य विरतेथ रतिञ्जे नम्रकंधर उवाच स ताम्र: ।
मद्वचोऽपि नृपते श्रवणीयं चारु वेतर दथास्तु विचारे ॥४४॥

इतीति इत्येव मुक्त्वा तस्मिन् रतिज्ञास्त्रज्ञेदुर्धरे विरत सति नम्रा कंधोरा ग्रीवा य स ताहृश: ताम्रो नाम मंत्री उवाच हे नृपते मद्वचोपि श्रवणीयं त्वयेतिशेष: तत् वच: विचारे क्रियमाणं चारु अस्तु अथवा इतरत् अचारु अस्तु अथापि इष्टेनोत्तरं देयमेवेतत्राशया श्रोतव्य मिति भाव: ॥ ४४ ॥

संति चारु वचना इह नैके रंजनाय नृपते र्न हिताय ।
सत्यवक्तु रिह दुर्लभतो द्वाश्रोतु रप्युभयुजिस्तु समृद्धि ॥ ४५

ननु तद्वचश्चेदचारु त्वया निर्णीतं तर्हि किंकथनेनेत्याह संतीति हे राजन् इह जगति चारुवचना: अनेके संति यद्वा चाटु वचना इति पाठ: तत्र मिथ्याभियुक्त चतुरवचना इत्यर्थ: परन्तु ते नृपते: रंजनाय वदन्ति न तु हिताय परिणामे दु:खदत्वात् अथ च इह स्वामिना हिताय सत्यवक्तु र्जनस्य दुर्लभता ऊह्या न केवलं सत्यवक्तु रेव किन्तु सत्यवच: श्रोतुरपि दुर्लभतैवास्ति उभयो: संभवे किं सिद्ध्यतीत्याह उभयो: सत्यवक्तु सत्यश्रोत्रो: युजिर्योगस्तु समृद्धयै संपदे भवति तदुक्तं किराते स किं सखा साधु न शास्ति योऽधिपं हितान्नय: संशृणुते स किं प्रभु: सदानुरक्तेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्व संपद इति ॥ ४५ ॥

नैव सा स्मरवती व्यवसेया ना नृजुर्लसति गीरदसीया ।
मन्यसे यदि विलोम मथास्याहेति संहतिभृतीवद हेतुम् ॥४६

अथ किं सतंग गदसीति पृष्टस्तावद्दुर्धरोक्तिं खंडयति नैवेति हे राजन् सा देवी स्मरवती कामुकी त्वयान व्यवसेया न विचारणीया तर्हि व्यंग्यं कथं गदतो यतस्त्वाह अदसीया एनत्संबंधिनो गोः वागपि अनृजु वक्रा न लसति वाच्यार्थ एव तद्दवसि नतुव्यंगयार्थ इत्यर्थः अथ यदि विलासं मदुक्त वचसः अन्यथा स्मरवत्वादि विशिष्टतां तस्यां मन्यसे तर्हि अस्याः शस्त्र समूहधारणे हेतुं वद यदि स्मरवती स्या त्तर्हि शस्त्राणि कथं धारयेत् वीरशृङ्गार यार्मिथो विरोधादित्यर्थः अतो दुर्धरोक्तं त्वया न ग्राह्य मिति भावः ॥ ४६ ॥

न व्यलोकि जगति क्व च नैवा श्रावि तादृगबलातुलरूपा ।
निर्भयं धृतमहासिनिशि तास्त्राष्टादशप्रमितदो र्हरियाना ॥ ४७

उक्त वचो दाढर्याय तस्या आश्चर्यतां दर्शयति नेति हे राजन् तादृशी अबला इह जगति कुत्रापि न व्यलोकि न दृष्टा नापि अश्रावि श्रुता कीदृशी अतुलं अनुपमं रूपं यस्याः तथा निर्भयं यथा स्यात् तथाधृतानि अस्त्राणि यया तया अष्टादश प्रमिता दोषः भुजा यस्याः तथा हरिः सिंहोयानं वाहनं यस्याः यदि कामुकी स्यात्तर्हि दृश्यरूपा न स्यादिति भावः ॥ ४७ ॥

दुर्निमित्तपिशुना निशि दृष्टाः सुप्तिगेन च मया प्रतिगेहम् ।
कृष्णवेषवनिता विलपंत्यः पक्षिणश्च विकृताखवंतः ॥ ४८ ॥

ननु स्यादेतत् परन्तु बलेनापितां स्वाधीनां करोमीति तदाशयं ज्ञात्वा तस्य मरणासन्नतां सूचयति दुर्निमित्तेति हे राजन् अद्य रात्रौ सुप्तिं प्राप्तेन सुप्तेन मया विलापं कुर्वंतः मलिनवासो धारिण्यःवनिताः गेहंगेहं प्रतिदृष्टाः तथा विकृताः वैलक्षण्येन भीतिप्रदाः आरवाः शब्दा येषां तादृशाः पक्षिणश्च दृष्टाः ननु तेषां किं फल मित्याह को० वनिताः पक्षिणश्च दुर्निमित्तस्य अशुभस्य पिशुनाः सूचकाः अग्रे अशुभमेव भवितेति ज्ञापका ॥ ४८ ॥

तन्न भावि भवुक्तं भविता ते लक्षणै रिति विलक्षित मेभिः ।
प्रातिकूल्य मुपगंतरि दैवे वज्रतां तृणमपि ब्रजतीह ॥ ४९ ॥

एतदेवाह तदिति तत्तस्मात् इतरभिर्दुःस्वप्नादिभिर्लक्षणैः मया इति त्रिलक्षितं इति किं न तव भावि भविष्यत्कालीनं भवुकं कल्याणं न भवता त्वां मा हनिष्यतीति ध्वनिः नान्वद्रादि जतारं मां मा कथमलं जेतुमित्यतआह हे राजन् दैवे प्रतिकूलतां उपगंतरिसति इह तृणमपि वज्रतां व्रजति अतो ऽबलापि त्वां हंतु मल मिति भावः ॥ ४८ ॥

चेच्चिकीर्षसि पलायन मस्मिन्शक्रजेतु रतुला तव गर्हा ।
युद्ध मेव तदिहास्ति वरीयो यद्द्वयेऽुभयथा सदुदर्कं ॥ ५० ॥

इति चेत्तर्हि पलायनं कार्य मित्यतआह चेदिति अस्मिन्कार्ये यदि त्वंपलायनं कर्तुमिच्छसि तर्हि इंद्रजेतुस्तव अतुला गर्हा निंदा भविष्यति अहो इंद्रादिजेतापि महिषः स्त्रिया पलायिता इति जनो निंदांकरिष्यतीति भावः तर्हि किं विधेय मित्यतआह तत्तस्मात् इह तव युद्धमेव वरीय अति श्रेष्ठमस्तियत् युद्धं उभयथापि यदो जित स्वयं मृतेपिच शोभनोत्तरफलं भवेत् पक्षद्वयेपितलाभ एवेत्यर्थः तदुक्तं गीतायां हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीं तस्मादुत्तिष्ठकौंते य युद्धाय कृतनिश्चय इति उदर्कःफल मुत्तरमित्यमरः ॥५०॥

नीतिरीति रिति ते गदितामे या यथामति हिता किमु नेयं ।
इत्युदीर्य्य विरतं स त मूचे साधु ते सचिव सूनृत मुक्तम् ॥५१

अथ सोक्ति परीक्षायै तं पृच्छति नीतीति हे राजन् ते तुभ्यं इत्थेवंविधाया नीतिरीति मया यथा मति गदिता सा हितास्ति किमु न हितास्ति अथेत्युक्त्वा विरतं तं तामसः महिषः ऊचे हे सचिव त्वया साधु शोभनं सूनृतं सत्यं च उक्तं अत स्तव वचोऽतिदुर्लभ मितिभावः प्रियसत्ययोरेकत्रावस्थापनात् तदुक्तं किराते हि तं मनोहारि च दुर्लभं वचः इति सूनृतं प्रिये सत्ये इत्यमरः ॥ ५१ ॥

अथ्य दक्षतमति स्व विडालाक्षो महीक्षित मथोज्झितपक्षः ।
दक्षता क्षिति पते ऽत्र विलक्ष्या मंत्रिणा मभि तदागमहेतुम्

मत्यदिति अथ विडालाचो नाम मंत्री महीक्षितं महिषं अस्यत्कीदृशः अच्चता अनष्टा मति र्यस्यतथा उज्भित स्वपक्षःपच्चो येन पच्चपातं विहाय यथा वदुक्तवानित्यर्थः किमुवाचेतत्राह हे चितिपते अत्रास्मिन् नीतिकार्ये एषां मंत्रिणां तस्या आगमहेतुं प्रति त्वया दच्चता विलच्च्या ज्ञातव्या किमर्थं मियमागते त्वेतान् पृच्छे तत्रश्च: ॥ ५१ ॥

मन्मते तु नृपते कृतिरेषा मायिनां दिविषदां निखलास्ति
अन्यथा कथमिहानवलंबा गर्जतीय मबला सबलेव ॥५२॥

अथ त्वमेवाख्याहीतत्रतत्राह मदिति हे राजन् मम मते तु एषा निखिलापि तदुत्पत्त्यागमनादिरूपाकृतिःमायावतां देवानामस्ति अन्यथा तेषां चेत्कृति र्न स्यात् तर्हि इयं अनवलं वा निराश्रया अवला इह सवलेव कथं गर्जति ॥ ५२ ॥

तानपीह पिहितान् क्वचिदूहे सर्वं एव समये तु सहायाः।
प्राक्तना निजवृथा इव तस्यास्त्वद्वधाय विबुधा भवितारः ५३

ननु ते कुत्रेतत्रतत्राह तानिति तान् देवानपि इहैव कुत्रचित् पिहितान् तिरोभूतान् तर्कयामि अथ पिहिताः किं करिष्यतीत्यतत्राह समये युद्ध काले सति एते सर्वे एव देवाः तव नाशाय तस्याः सहाया भवितारः के इव प्राक्तनाः पूर्वजन्म संचिताः निजवृषाः स्वपुण्यानीव यथा अदृष्ट रूपेण तिरोहितानि निजपुण्यानि समये सहायानि भवंति तद्वत्तेपीतत्रर्थः वृषो गव्याखु धर्मयो रिति हैमः ॥ ५४ ॥

एत देवविषयीकुरुते धीर्नास्ति मे गति रथो भवितव्ये ।
यद्धियासुघटितं नियति स्तद्द्राकृणोत्यघटितं तु तनोति ॥५४॥

ननु तेषु सहायो भूतेष्वपि पुनः किं भविष्यतीतत्रतत्राह एतदिति हे राजन् मम बुद्धिः एतन्मात्र मेवार्थं विषयी कुरुते अथ मे गति र्भवितव्ये इदमेवभविष्यतीतत्रेवं त्रिधेर्थे नास्ति ननु बुद्धिमतां भविष्यदर्थेपि गतिरस्तीतत्रतत्रबुद्धिमद्भि र्यत् बुधा सम्यक् एतदेव भविष्यतीति घटितं स्यात् तत् नियतिः दैवं

द्राक् शीघ्रं क्षणोति नाशयति यत्तु बुद्ध्या कदाचिदपि न घटितं तत् तनोति विस्तारयति तदुक्तम् अघटित घटितानि घटयति सुघटित घटितानि जर्जरी कुरुते विधिरेव तानि घटयति यानि पुमान्नैव चिंतयतीति ॥ ५४ ॥

जीवव त्त्व मसि न स्त्वयि तुष्टे सासवो निरसवः स्म च खिन्ने ।
त्वन्निदेश मनुसृत्यविपत्तिः श्रेयसे विपदिवेतरथा श्रीः ॥५५ ॥

न च स्वप्राणरक्षार्थं युद्धाङ्गीतै र्भवद्भि रिद मुच्यत इति वाच्य मितयाह जीववदिति हे राजन् अस्माक मनुजीविनां त्वं जीववत् असि अतएव त्वयि तुष्टे सति वयं सासवः सप्राणाः स्म त्वयि खिन्ने तु निष्प्राणा इव स्म अथ तदीयं निदेशं आज्ञामनुसृत्य विपत्तिरपि अस्माकं श्रेयसे भवति इतरथ त्वदाज्ञा मननुसृतत्र तु श्रीरपि विपत्ति रिव ॥ ५५ ॥

दुर्मुखोप्यभिमुखं महिषस्य प्राहिणोत् द्रुहिणधी रितिवाचम् ।
एतदुक्तपुनरुक्तय एषा शेमुखी हि मुखरी कुरुते माम् ॥ ५६ ॥



दुर्मुखइति अथ दुर्मुखो नाम मंत्री अपि महिषस्य संमुखं इति वाचं प्राहिणोत् प्रेरयामास कीदृशः द्रुहिणवत् ब्रह्मवत् धीर्यस्य यद्वा जह्यतीति द्रुहिणा कलहार्थिनी धी र्यस्य इति कां हे राजन् एतेन विडालाक्षेन उक्तस्यै वार्थस्य पुन रुक्तये एषा शेमुखी बुद्धिरेव मां मुखरो कुरुते वाचालं करोति तव दार्ढ्यार्थमेत असिपादित एवार्थो मयापि स्वबुद्ध्या ऽन्यरीत्या प्रति पाद्यत इत्यर्थः धीः प्रज्ञा शेमुखी मतिरितग्रमरः ॥ ५६ ॥

कालरात्रि रिवनः कुलमूलोन्मूलनाय खलु लक्ष्यत एषा ।
नार्णवो ऽपिसुधियायदुपेक्ष्याः स्फायमानरुग मिवहुताशः ॥

किं गदसोतयाह कालरात्रि रिति हे राजन् एषा देवी अस्माकं रक्षसां कुलरूपवृक्षस्य मूलोन्मूलनायकालरात्रिः प्रलयोपलक्षिका रात्रि रिवलक्ष्यते नात्र न्यूनत्व बुद्धिः कार्येत्याह यत् यस्मात्धीमता अर्णवः न्यूना अपिरोगरिपु

हुताशाः स्फायमाना वृद्धिं प्राप्नुवंतः न उपेक्ष्याः यथाऽग्निरोगौ स्वल्पावपि वृद्धिं प्राप्य दुस्तरौ भवतः तथा शत्रुरपीत्यर्थः ॥ ५७ ॥

**साम सा मनति नो न च दानं दूततः श्रुत मिदं भवतापि ।**
**भिद्यते कथ मसावसहाया तच्छ्रिये श्रय चतुर्थ मुपायम् ॥ ५८**

ननु नीतिवित्प्रतिपादिताः सामादयः उपायास्तत्र विधीयंता मित्याशंकायामाह सामेति हे राजन् सा देवी सामनश्रामनति तथा दान मपि नामनति इद मेव पुरा प्रेषितात् दूतादपि भवता श्रुतमेव अथ असहाया एकाकिनो सा कथं भिद्यते भेदोहिरिपोः सहायेष्वेव युज्यते एकस्यां भेदः कथं जायेतेत्यर्थः तर्हि किं विधेय मित्यतआह तत्तस्मात् श्रिये उभयथापि संपदर्थं चतुर्थ मुपायं दंडरूपं अयमुक्तमेव कुर्वित्यर्थः ॥ ५८ ॥

**नो पलायनमति स्त्वयि युक्ता जंभभित्प्रभृतिभेत्तरिरांभे ।**
**चेत्पलाय्य न पुनर्मरणं स्या त्तर्हि गर्ह्य मपि तद्ग्रहणीयम् ५९**

ननु युद्धे कृते भवता चेन्मृतिरवश्यं निश्चिता तर्हि पलायनं कार्यं मिति चेत्तत्राह नो इति हे रांभे रंभात्मजेत्वयि पलायनस्य मति र्न युक्तास्ति कुत इत्याह कीं० त्वयि जंभभित्प्रभतीन् इन्द्रादि देवान् शस्त्रैर्भिनत्तीति तादृशे इंद्रादीन् देवान् जित्वा स्त्रीतः पलायन मति र्निंद्य मित्यर्थः ननु स्वप्राण रक्षार्थे निंद्यमपि कर्माचारणीय मित्यतआह सत्य मेतत् परन्तु यदि पलाय्यपुनः कदाचिदपि मरणं न स्यात् तर्हि अति निंद्यमपि तत्पलायनं ग्रहणीयं अयं भावः विदुषा तु तावत् प्राणेषु नश्यत्स्वपिनिन्द्यं कर्म नाचरणीयं यदि भक्षितेपि लशुने व्याधिशांताभवत् तस्मिन्नाचरितेपि प्राणा नश्येयुस्तत्कथमा चरणीय मिति ॥ ५९ ॥

**कोपि न श्वसिति संतत मस्मिन्नुद्भुता य दसवोऽत्रभवाब्धौ**
**स्तोकमप्य खिललोकप शोकं मा कृथा अथ वृथा मरणे तत्**

न च ब्रह्मणो वरप्रदानान्मे क्षतिरेव नास्तीति वाच्यमित्याह कोपीति अस्मिन्संसारे कोपि जनः सन्ततं निरन्तरं न श्वसिति न जीवति यद्दा त्वहर-

दाता कः ब्रह्मापि निरन्तरं न जीवति तस्यापि द्विपरार्धमात्र कालावच्छिन्नत्वात् कुत इत्याह यत् यस्मात् अस्मिन्संसार समुद्रे अमी प्राणाः बुद्बुदा इव सन्ति अथ मत्तो मृते रवश्यं भाविता श्रुत्वा युद्धोत्साहनाशकं शोकं न कुर्यादित्याशयेनाह हे अखिल लोकपालक तत्तस्मात् मृतेरवश्यं भावित्वात् स्तोकं अल्पमपि शोकं मरणविषये वृथा मा कृथाः न कुरु अपरिहार्येर्थे शोकस्य व्यर्थत्वात् तदुक्तं गीतायाम् जातस्य हि ध्रुवो मृत्यु ध्रुवं जन्ममृतस्य च तस्मादपरिहार्येर्थे न त्वं शोचितु मर्हसीति ॥ ६० ॥

नो विलंबितु मथाय मनेहा नेह पूर्ववदवैहि सुकृत्यम्।
प्रेषयस्व भृतकं तदमुं मा मार्य कार्य मिह सेत्स्यति शौर्यात्।

न च सहसा विदधीत न क्रिया मिति नीतिविदुक्तो विचार्य विलंबेन कार्यं विधास्याम इति मंतव्य मित्याह नो इति हे राजन् अथ अयं अनेहाः समयः विलंबितुं न अर्हतीति शेषः ननु पूर्वं विलंबेनैव शक्रादयो जिता इत्यत्राह इहास्मिन् कार्ये पूर्ववत् शक्रादि युद्धवत् सुखेन कृतं न अवैहि हे आर्य्य तत्तस्मात् अमुं पुरः स्थितं मां भृतकं तां प्रति प्रेषयस्व यतः इदं कार्य्यं शौर्यात् पराक्रमादेवसेत्स्यति सिद्धिं प्राप्स्यति अहं तत्र युद्धं करिष्यामीति भावः कालो दिष्टोप्यनेहापि समयोपीत्यमरः ॥ ६१ ॥

वाष्कलोऽप्य विकलं त मथो चे वाष्कलासु कुशलः कलहार्थी।
खड्गचर्मभृति मा नृपभैषीः कालतोपि मयि जीवति दासे ६२

वाष्कल इति अथा विकलं यथा स्यात्तथा वाष्कल नामा मन्त्री अपि तं महिषं ऊचे कीदृशः वाचां कलासु कुशलः तथा कलहार्थी योद्धुकामः किमूचे इत्यतआह हे नृपमयि खड्गचर्मभृतिदासे जीवति सति कालतोपि त्वं मा भैषीः भयं न कुर्वित्यर्थः कालमपि जेतुं मम शक्ति रस्ति किं पुनरबलामिति भावः ॥ ६२ ॥

भाजनं मम रुषो न मुरारि र्नो पुरारि रथ का गणनैन्द्री।
मत्सरप्रकृतिजर्जरितांगः संगरे कथ मलं सुरसंघः ॥ ६३ ॥

नन्विन्द्रादय स्तत्सहायिनः संति तान् कथं जेष्यसीत्याह भाजन मिति हे राजन् मम क्रोधस्य भाजनं पात्रंमाश्रय इति यावत् मुरारि विष्णुर्नास्ति मम क्रोधं सोढुं विष्णुरपि नाल मित्यर्थः अथ पुरारिः शिवोपि न पुनः इंद्रो इन्द्रस्येत्यर्थः गणना क्वास्ति स तु दृष्ट्यैव नंक्ष्यतीत्यर्थः अथ च मम शराणां प्रहारै र्जर्जरीभूतांगो देवसमूहः युद्धे स्थातुं कथमलं न कथंचिदपीत्यर्थः ६३

उद्भवं युधि जगद्भव वीरस्थायिभाव मुररी कुरु तस्मात् ।
उज्झति त्वयि तु तं वय मुच्चैः स्याम कातरतरा अपि शूराः ॥

न चैतन्नानुमन्तु मुत्सहे इति वाच्य मित्याह उद्भव मिति हे जगतो भव स्वामिन् तस्मात् वोररसस्य स्थायिभावे युद्धे उद्भवं उत्साहं अंगी कुरु अथ त्वयि तमुत्साहं उज्झति त्यक्तवति तर्हि वयं उच्चैःशूरा अपि कातरतराः स्याम उत्साहं विना तदात्मकस्य वोररसस्यानुत्पत्तेः तदुक्तं कार्यारंभेषु संरंभः स्थेया नुत्साह उच्यते उत्साहात्मा भवे द्वीर स्त्रिधा धर्माजिदानत इति स्थायिभाव-स्यापि लक्षण मुक्तं विरुद्धा अविरुद्धा वायं तिरोधातु मक्षमाः आनन्दा कुर-कन्दो सौभावः स्थायिपदास्पदमिति अर्वाच्यमिति स्थास्य रूक्क्क् नत्यायेन बो-द्धव्या मह उद्भव उत्सव इत्यमरः ॥ ६४ ॥

दिष्ट मत्र वद केन नु दृष्टं कल्पितं समरभीरुभि रिष्टम् ।
दृश्यते प्रकट मेव यदीयं सत्फलं श्रय हितं पुरुषार्थम् ॥ ६५ ॥

न च उत्साहस्य पौरुषात्मकत्वात्तस्मिंश्च कृतेपि प्रायशः फलसिद्धे रदर्शनादकृते च फलसिद्धे र्दशनान्निष्फलता सिद्धे र्दैवमेवपरमिति वाच्य-मित्याह दिष्टमिति हे राजन् नु वितर्के अत्र जगति घटादिवत् दिष्टं दैवं केनदृष्टं न केनापीत्यतो वालविभीषिका वत्कल्पना मात्रमेवेत्यर्थः ॥ तर्हि कथं प्रतिपाद्यते इत्यतआह इदं तु दैवं समरात् भीरुभिः कात-रैः निजेष्टं कल्पितं न तु शूरैः पौरुषं चाथ दैवं च शूरकातरयो र्मतमित्युक्त इति दैवं निरस्य पौरुषं प्रतिपादयति यस्य पुरुषार्थस्य प्रकटमेव सत्फलं दृश्यते तं हितरूपं पुरुषार्थं श्रयस्व कुरु यथेंद्रः शतयज्ञान् कृत्वेन्द्रतां प्राप्त स्तथा न कश्चिद्दैव माश्रित्य इंद्रतां प्राप्तो दृष्ट इत्यतः पौरुषमेव परं न तु दैवं

ओं नमः श्रिये तथेति तं मूर्ध्नि निदेश मैश्वरं
निधाय चाज्ञाय नतिं विधाय तौ ।
जयाय तां प्रत्यथ जग्मतुर्वलैर्वृतौ
पतंगौ शिखिनः शिखा मिव ॥ २ ॥

ओं नमो विघ्नहर्त्रे अस्मिन् सर्गे मंत्रि युद्धं वर्णयिष्यते तावदिति महिषेणाज्ञप्तयो दुर्मुखवाष्कलयो र्गमनप्रकार माह तथेति अथ तौ दुर्मुखवाष्कलौ तं ऐश्वरं ईश्वरस्य महिषस्य संबंधिनं निदेशं आज्ञां मूर्ध्नि निधाय मस्तके धारयित्वा अथ च अज्ञाय शीघ्रं महिषस्य नतिं विधाय कृत्वा तां देवीं प्रति जयाय जग्मतुः कीदृशौ वलैः सैन्यैः परिवृतौ कौ का मिव शिखिन अग्नेः शिखां ज्वालां पतंगाविव अनेन तयो र्मरणासन्नता सूचिता अस्मिन् सर्गे वंशस्थ वृत्तम् जजौ तु वंशस्थ मुदीरितं जराविति लक्षणात् ॥ १ ॥

ततो निमित्ता न्यगणय्य दर्पितौ
शुभेतराण्यध्वनि नद्धदंशनौ ।
उपेत्य तां तौ रथिनौ महारथा
वदूर मुत्क्षिप्तभुजावथोचतुः ॥ २ ॥

तत इति तदनन्तरं तौ मन्त्रिणौ अध्वनि मार्गे शुभेतराणि अशुभानि निमित्तानि शकुनानि अगणय्य तत्र हेतु दर्पितौ कि मस्माकं वलवतां शकुनै रित्यहं कृतौ अथ च तां देवी मुपेत्य अदूरं निकटमेव उत्क्षिप्तभुजौ संत ऊचतुः कीदृशौ नद्ध वद्ध दंशने कवचे याभ्यां तथा रथा रूढौ तथा महारथ दशसहस्रेण योद्धुं समर्थौ तदुक्तम् एको दशसहस्राणि योधये द्यस्तु धन्विन अस्त्रशस्त्रप्रवीणश्च महारथ इतिस्मृत इति तनुत्रं चर्मदंशनं उरच्छदः कंकटको जगरः कवचो स्त्रियामित्यमरः ।।

अयि स्फुरत्सुंदरतैकशेवधे विधेहि साफल्य ममुष्यवर्ष्मणः ।
मन स्त्वदर्थं व्यथितं जगत्पते र्वतात किं त्वां करुणाकुणद्धि न ॥

किमूचतु रितयपेचायां ताव त्क्षामपूर्वक मूचतु रितयाह अयीति ; कोमलामंत्रणे हे स्फुरंतो या सुंदरता तस्या: एकाग्रेवधेनिधिरूपे देवि असुषप्रवर्णमण: शरीरस्य साफल्यं विधेहि तेन सह भोगान् भुक्त्वातिसुंदरस्य तच्छरीरस्य साफल्यं भविष्यतीति भाव: अथ , चेन्निःस्पृहासि तथापि परोपकारायापरवश्य मेवेदं कार्यमित्याहतु: हे देवि तृदर्थं जगत्पते महिषस्य मन: व्यथितमस्ति वत खेदे अत्रास्मिन् महिषे त्वा करुणा किमर्थं न रुणद्धि नावृणोति अस्मिन्दयां कस्मान्न करोषीत्यर्थः रुधिरावरणे इत्यस्य रुधादित्वा न्निधि नांशेव धिरित्यमर: शरीरं वर्ष्मविग्रह इति च ॥ ३ ॥

वृथात्र तारुण्य मरण्यवासिभि र्हिरण्यगेहार्ह मु किंनुनीयते।
शरण्य मेनं तरुणि श्रयाशु तत्निराश्रयानो वनिता लता वरम्

वृथेति हे तरुणि अत्र निर्जनदेशे अरण्यवासिभि मृगादिभि: सह इदं तारुण्यं वृथा किं किमर्थं नीयते कीदृशं हिरण्मयगेहनिवासयोग्यं अनुचित मेतदित्यर्थः तत्तस्मात् हिरण्यगृहनिवासार्थं तारुण्य साफल्यार्थं च एनं शरण्यं महिषं आशु शीघ्रं श्रय हि यत: वनिता लताश्च निराश्रया सत्य: न वरं न श्रेष्ठाः यथा लता वृक्षं विना न तिष्टंति न च शोभंते तथा वनिता अपि नायकं विनेत्यर्थः वरमिति मां त मव्ययम् उनु इतिह्वावपरति वितर्कबोधकौ ॥ ४ ॥

इतीरिताभ्यां निजगाद सा मितं
स्मितांचितास्यां तरमर्षदोहदा
अहो पशूनां पशुता दुरत्यया
स्मरंति हा सन्नलया अपि स्मरम् ॥ ५ ॥

इतीति इत्येव माभयां मंत्रिभयां उक्ता सा देवी मितं वचो जगाद कीदृशी स्मिते न अंचितं आस्यं यस्याः तथा अंत र्मनसि अमर्षस्य क्रोधस्य दोहदो गर्भो यस्या: किं जगादेत्याह अहो आश्चर्यं एषां महिषादीनां पशूनां शुपात दुरत्यया दुःखेन नाशितुं शक्यास्ति कुत इत्याह हा खेदे आसन्न

समपीरूयो लयो नाशो येषां तादृशा अपि रंतः यस्मात्कामं स्मरंति दोहदो गर्भचिन्हे पि तथा गर्भाभिलाषयोरिति हैमः ॥ ५ ॥

कथं वताहं त्वधमः पशुष्वयं जगत्प्रसूं मा मपि वीच्छितुं दृशा समो हि लोकेषु सुखाय संगमो न कामधेनुः खर मीहते क्वचित् ॥ ६ ॥

कथ मिति वत खेदे अयं पशुषु अधमो महिषः मां जगतां मातरं दृशापि वीच्छितुं कथं योग्यो भवति यतः लोकेषु समस्तुल्य एव संगम सुखाय भवति न तु विषमः अत एव दृष्टांत माह क्वचिदपि कामधेनुः खरं न ईहते न वांच्छती तयर्थः अनेना तिनीचता तस्य सूचिता ॥ ६ ॥

अथो खलूक्त्वा खलु तं विशृंखलं
खलं निवोद्धुं त्वधुनापि गम्यताम् ।
यथा स्वयं स्वर्गपदं स वज्रिणे
विसृजय्याया च्छूसितुं रसातलम् ॥ ७ ॥

अथोइति अथानंतरं खलूक्त्वा अन्यत्र वक्तव्य मितयर्थः खलु निश्चयेन हे मंत्रिणः तं विशृंखलं उल्लंघित सदाचारं खलं दुष्टं च ते महिषं निवोद्धुं उपदेष्टुं अधुनापि गम्यतां किमुपदेष्टु मितयाह यथा येनोपदेशेन स महिषः स्वयमेव वज्रिणे इंद्राय स्वर्गपदं दत्वा श्वसितुं किंचित्कालं जीवितुं रसातलं प्रति यायात् तत्रैव तस्य जीवनावकाशो नान्यत्रेत्यर्थः अलं खल्वः प्रतिषेधोक्तेति खलूक्त्वा ॥ ७ ॥

निशम्य ता वितय थ तापितौ रुषा
पृषत्कवृष्टिं तूभितो ववर्षतुः ।
अनागता मेव शिवापितां तदा
शरे रणूकृतय जघान ता वपि ॥ ८ ॥

निशम्येनि अथ तौ मंत्रिणौ इति तस्य वाचं निशम्य क्रोधेन तापित

संती तां प्रतिवाणवृष्टिं ववषतुः सा शिवापि तां वाणवृष्टि मनागता मेव स्ववाणैः अणूकृत्य चूर्णयित्वे तदर्थः तौ दुर्मुखवाष्कलावपि जघान ॥ ८ ॥

बभूव ताव द्रणमूर्ध्नि सम्मुखः स
वाष्कलः साचिणि दुर्मुखे स्थिते।
तयो रथासी त्तुमुलं चिरं मृधं
गदासिवाणांकुशपाशपर्शुभिः ॥ ९ ॥

युगयद्वयो र्युद्धं वर्णयित्वैकैकस्याह बभूवेति आदौ युद्धमस्तके स वाष्कलः तस्याः सम्मुखो बभूव क्व सति दुर्मुखे साचिणि स्थिते सति अथैवं सति तयो र्देवो वाष्कलयोः चिरं कालं वाणां कुशपाशपरश्वादिभिः तुमुलं युद्धं आसीत् तुमुलं रणसंकुले इत्यमरः कुठारः स्त्री च स्वधितिः परशुश्च परश्वधः कुटाः टंकः पर्शुरथेति रभसात् पर्शु शब्दोपि ॥ ९ ॥

दुरासदं तं युधि वीक्ष्य चंडिका
जघान वाणै रथ पंचभीरुषा।
स चा पि चापी चपलं शिली मुखै
र्लुलाव तां स्तां तु तुतोद सप्तभिः॥ १० ॥

दुरासद मिति अथ सा चंडिका तं वाष्कलं युधि दुरासदं दुर्विनाश्यं वीक्ष्य पंचभिर्वाणैः क्रोधेन जघान सः वाष्कलोपि चापी धनुष्मान् चपलं शीघ्र मेव स्ववाणैः तस्या स्तान् वाणान् लुलाव चिच्छेद तां चंडिकां तु सप्तभिर्वाणैः तुतोद विव्याध ॥ १० ॥

तदीयवाणां स्त्रिगुणै स्तु पंचभि र्बभंज मंजुं च रथं स्वमार्गणैः।
अथार्धचन्द्रेण च तस्य कार्मुकं प्रदर्शयन्ती निजहस्तलाघवम्

तदोयेति अथ चंडकापि तस्य वाणान् त्रिगुणैः पंचभिः पंच दशभि रित्यर्थः स्ववाणै र्बभंज तस्य मंजुं रथं च वभंज अथच अर्धचंद्राकारेणवाणेन तस्य धनुश्चिच्छेद कोदृशो निज हस्तस्य लाघवं चापलं प्रदर्शयंति ॥ ११ ॥

गदां गृहीत्वा स निहन्तु मुत्कटा मथाभिदुद्राव मुमूर्षुरंबिकाम्
तमापतन्तं गदयैव सा चिता ऽवपातयन्मूर्ध्नि निहत्य मूर्च्छितम्

गदामिति अथ स वाष्कलोऽपि मुमूर्षु र्मरणासन्नः उत्कटां गदां गृहीत्वा अंबिकां निहन्तुं अभिदुद्राव सापि तं आपतन्तं वीक्ष्य गदयैवमूर्ध्नि निहत्य मूर्च्छितम् सं तं चितौ अपातयत् ॥ १२ ॥

अथो मुहूर्तात्पुनरुत्थितः श्वसत्
फणीवरोषाद्धृदयो जघानताम्।
रुषाथ शूलेन शितेन चण्डिका
शिरो विदार्य भुवि तं न्यपातयत् ॥ १३ ॥

अथोऽइति अथ मूर्च्छानन्तरं स वाष्कलः मुहूर्तमात्रात्पुनः उत्थितः अथ स रोषात् फणीव श्वसन् सन् तां देवीं गदया जघान सा चण्डिकापि क्रोधेन युक्ता तीक्ष्णेन शूलेन शिरो विदार्य तं वाष्कलं भुवि न्यपातयत् १३ ॥



विभग्नपत्त्राश्वरथेभसंकुले रणांगणे नृत्तपिशाचिनीगणे।
स दीर्घनिद्रामपुनर्विबोधिनीं चिरं सिषेवे प्रविकीर्णमूर्धजः॥

विभग्नेति अथ सः वाष्कलः तस्मिन् रणांगणे न विद्यते पुन विंबोधो जागरो यस्यां तादृशीं दीर्घनिद्रां चिरकालं सिषेवे ममारेत्यर्थः कीदृशः प्रविकीर्णा मूर्धजाः केशा यस्य की॰ रणांगणे विभग्नैः संकुले पत्यश्वरथेभैः तथा नृत्तः नृत्यत्॰ युक्तः पिशाचिनीनां गणो यत्र ॥ १४ ॥

समिन्मखेऽस्मिन्प्रथमं हुते मुदा मखाशिनः खेऽथ जयेतिचुक्रुशुः।
इतःक्रुधाक्रूरमुखोऽथदुर्मुखः ससंमुखोभूद्युधितां विभर्त्सयत् १५

समिदिति अस्मिन् युद्ध यज्ञे तस्मिन् वाष्कले प्रथमं हुते सति आकाशे स्थिता देवाः मुदाजयजय इति चुक्रुशुः इतश्च तेषां शब्दं श्रुत्वा क्रोधेन क्रूरमुखो यस्य तादृशः सः दुर्मुखः युद्धे तां देवीं विभर्त्सयन्सन् संमुखोऽभूत् १५

**स तिष्ठ तिष्ठेति वदन्धनुर्धरो धराधरप्रख्यतनु समाययौ ।**
**शिवापिदध्मौ निजशंखमुच्चकै र्धनुश्चविस्फार्य्यरिपूनकंपयत्**

सइति स च पर्वततुल्यशरीरः धनुर्धरः तां प्रति तिष्ठ तिष्ठ इति वदन् समाययौ अथ शिवापि निज शंखं उच्चकै र्दध्मौ अथ च धनुः विस्फार्य्य टङ्कारयित्वा रिपून् अकम्पयत् ॥ १६ ॥

**अमूमुचद्वृष्टि मसावथैषवीं प्रकुप्यदाशी विषघोरदर्शनां ।**
**अचूर्णयत्तामचिरेण चण्डिका प्रचण्डकोदण्डविनिस्सृतैःशरैः॥**

अमूमुचदिति अथासौ दुर्मुखः ऐषवीं बाणसम्बन्धिनीं वृष्टिं तां प्रति अमूमुचत् कीदृशीं अतिक्रुध्यत्सर्प्यवत् घोरं दर्शनं यस्याः अथ चण्डिकापि अत्युग्रात् निज धनुषः विनिस्सृतैःशरैः तां शरवृष्टिं अचिरेणैव अचर्णयत् ॥१७

**परस्परं ता वभिजघ्नतू रुषा**
**जयैषिणौ हेतिभि रात्तकार्मुकौ**
**रणावनिः सा सकरं पिपासुभि**
**र्वृता खगध्वादिभि रुल्वणा भवत् ॥ १८ ॥**

परस्परमिति इत्थं तौ देवी दुर्मुखौ क्रोधेन परस्परं शस्त्रैः अभिजघ्नतु कीदृशौ जयाभिलाषुकौ तथा गृहीतधन्वानौ एवं सति सा रणभूमिः रुधिरप्रवाहं यातु मिच्छुभिः खगध्वादिभि र्वृतासतो उल्वणा अतिभयानका अभवत् ॥ १८ ॥

**उवाच रोषादथ कालमोहितः सुराहितःपाणिमुदस्यतांप्रति**
**ऋते यमागारमुपेत्य मां शठे हरिं मृगी वाद्य वदक्व यास्यसि**

उवाचेति अथ सः सुरशत्रु दुर्मुखः कालेन मोहितः सन् करं उत्क्षिप्यतां प्रति क्रोधात् उवाच किमुवाचेत्याह हे शठे अद्य मां प्राप्य यममंदिरं विना कुत्र यास्यसीति वद कं प्राप्य केवसिंहं प्राप मृगी च तत्सरस्वती तु प्रत्यु त. स्मौति हे ऋते सत्रो अद्य मां यमागारं उपेत्य प्रापयित्वा अन्यस्मिन् क्व कस्मिन् सदृशे शठे युक्ता युक्तविचारशून्ये दैत्य हरि कालं यास्यसिप्रापयिष्यसि अंतर्भाविण्यर्थोव की०तु मृगोविद्यते यस्मिन् स मृगोचंद्र स्तादृशो वराजमाना

यद्वा मृगाऽन्वेषणे मृगयति दुष्टान् सामतो वा शब्दोत्र वितर्के इति वद यद्वा मृगों वनिता विशेषां वातिपद्मिनीत्वादतिक्रम्य गच्छतीति मृगो वा मृगः पशौ कुरंगे च करि नक्षत्रभेदयोः अन्वेषणायांयाच्ञायां मृगी तु वनितांतरे इति हैमः ॥ १९ ॥

**जगाद रुष्टा जगदंबिकापि तं श्ववद्वृथा ते बहुगर्जनै रलम्।**
**यथा हतो यं समरेऽमरार्हित स्तथा धुना त्वा मपि हंतुमुत्सहे**

जगादेति अथितत्क्षणा जगदंबिकापि रुष्टा सती तं जगाद हे दुष्ट ते तव श्ववत् वृथैव बहुभि र्गर्जनै रलं साध्याभावात् गर्जनानि न कर्तव्यानीतरर्थं येन प्रकारेण युद्धे अयं देवशत्रु र्बाष्कलः मयाहतः तथैव अधुना त्वामपि हंतुं उत्सहे अत्र गमरमानसाधनक्रियापेक्षया गर्जनानां करणत्वात् तृतीया॥२०॥

**इदं वदंत्या। उपरि क्रुधासुरो रुरोध मार्गं गगनस्य मार्गणैः।**
**तदीयरोपानति कोपितोपिसाविधायरोपै स्तिलशस्तुतोदतम्।**

इदमिति इदंवचः वदंतया स्त्रस्याः उपरि सः असुरः क्रोधेन बाणै गगनस्य मार्गं रुरोध बाणै राकाशमाच्छाद यामा सेतरर्थः अथ सापितस्याः बाणान् स्वकोयै र्बाणैः अतिकोपेन तिलशः कृत्वा तं दुर्मुखं विव्याध कलंबमार्गणशराः पत्रीरोप इषुद्वयो रितामरः ॥ २१ ॥

**ततोस्यकोदंड मखंडयद्दृढं तथा कलंबै रथपंचभीरथम् ॥**
**सपत्तिरेवात्तविपत्ति रायया गदां गृहीत्वा जगदंबिकां प्रति॥**

ततइति तदनंतरं देवो तस्य दृढं धनुः अखंडयत् तथा पंचभिर्बाणैः तस्य रथं अखंडयत् अथ सः दुर्मुखः पत्तिः पदातिरिव भूत्वा आत्ता गृहीता विपत्ति र्येन तादृशः सन् गदां गृहीता देवीं प्रति आययौ ॥ २२ ॥

**हतो तिकोपाद्पितेन मस्तके तया स सिंहो न चचाल किंचन**
**अथोग्रधारेण शिवा त मुष्टिना चकार मूर्च्छा विधुरं सहासुभिः**

अथ तां सिंहमस्तके न्यपातयदित्याह हतइति अथ तेन बाष्कलेन तया गदया अतिकोपात् मस्तके हतोपि सः सिंहः किंचिदपि स्थानात् न च-

चाल अथ शिवापि उग्रधारेण ऋषिना खड्गेन प्राणैः सह तं दुर्मुखं मस्तके नरहितं चकार तस्य मस्तकं छित्वा गतप्राणं चकारेत्यर्थः ॥ २३ ॥

गतेथ तस्मिन्नपि वाष्कलांतिकं

रणे स्रवंती च भटासृजो स्रवत् ॥

ततो वशिष्टास्तुविशीर्णविग्रहाः

पलाय्य वृत्तं जगदुर्हयारये ॥ २४ ॥

गतेइति अथ तस्मिन् दुर्मुखेपि यमलोके प्राप्तस्य वाष्कलस्य समीपं गते सति तस्मिन् रणे भटशरीरजन्यस्य असृजो रक्तस्य स्रवंती नदी अस्रवत् अथ ततो स्रतयोः ये अवशिष्ठा दैत्याः ते दीर्णशरीराः संतः पलाय्य सर्वं युद्धभवं मंत्रिनाशजन्य वृत्तं महिषाय जगदुः ॥ २४ ॥

निशम्य देव्या निधनं गतौ सतौ

समं चमूभिः प्रधने विसिस्मिये ।

अहो परा कालगति र्मनीषिणो

वदंत्वतः किं नु विधेय मद्यमे ॥ २५ ॥

निशम्येति सः महिषः तौ दुर्मुखवाष्कलौ सेनाभिःसह युद्धे देव्या कृत्वा नाशं प्राप्तौ तेषां मुखात् श्रुत्वा विस्मयं प्राप किमित्याह अहो आश्चर्यं कालस्य गति परास्ति अवला यन्महाशूरान्निहंतीति भावाः इतश्चूस्य मंत्रिणः पृच्छति हे मनीषिणः अतः परं मयाद्य किं विधेय मिति वदंतु ॥ २५ ॥

स चिक्षुराख्येण वदन्नथेतिराडवादि सेनापतिनाकिमीशितः ।

भयंसमुत्थंमयिजीवतिस्त्रियाहतां हि तां विद्धि रणेधुनामया ॥

सइति इत्येवं वदन् सः राट् राजा महिषः अथ चिक्षुराख्येण सेनापतिना अवादि कथितः हे ईश मयि जीवति सति स्त्रियाः सकात् भयं किमर्थं समुत्थं स्वशौर्यं दर्शयति अधुना रणे मया तां हता मेव जानीहि ॥ २६ ॥

स इत्य मुक्त्वा नृपते र्निदेशतो जगाम तार्म्य ण समं चमूवृतः ।

ददर्श तां स्मेरमुखीं स्मरप्रसू मनन्यसाधारणशक्तिशालिनीं७२

स इति सः चिक्षुराक्षः इत्थ मुक्त्वा महिषसत्राज्ञया ताम्रेण पार्ष्णिपालकेन सह सेनावृतो जगाम अथ गत्वा तां स्मेरमुखीं ददर्श कीदृशीं स्मरसत्रसूं मातरं लक्ष्मीत्वात् यद्वा दर्शनेनैव स्मरं प्रसूते जनयतीति तां अथा अनन्यसाधारणशक्तिमतीं अनुपमपराक्रमामित्यर्थं ॥ २७ ॥

अवादय च्छंख मुदीक्ष्य तं च सा
चकार टंकार मपि सुधन्वनः ।
तदीयभीत्या स्व भटा दिशो द्रव
न्कथं चि दाश्वास्य सता नुवाच ताम् ॥ २८ ॥

अवादयदिति अथ सा देवी तं चिक्षुराक्षं वीक्ष्य शंखं अवादयत् तथा स्वधन्वनः टंकारमपि चकार तेषां शब्दजन्यभीत्या अस्य चिक्षुराख्यस्य भटा दिशः प्रति अद्रुवन् पलायिता बभवुः अथ सः चिक्षुराक्षः तान् त्रस्तान् स्वभटान् कथंचित् महता यत्नेन आश्वास्य किं स्त्रिया विभीयेति तत्र स्थापयित्वा तां देवीं उवाच ॥ २८ ॥



विभेमि नो कातरव त्त्वदारवै
रवैहि भीतं त्वघटा द्वधूवधात् ॥
विभासि मूढेव विभर्षिया शरा
न्धनुः कटाक्षे ष्वपि स त्त्वपि भुवोः ॥ २९ ॥

विभेमीति हे देवि एभि स्त्वदीयैः आरवैः शब्दैः इतरकातरवत् न विभेमि न विभेषि तर्हि युद्धं कुर्वितस्तत्राह परंतु पापप्रदात् स्त्रीवधात् मां भीतं जानी हि वधूपत्न्यां स्नुषा नार्योः सूक्ता सारिवयो रपीति हैमः स्त्रीवध पापं दुष्प्रतीकारं मत्वैव त्वया युद्धं न करोमी त्यर्थः अथ स्ववशीकरणाय तां व्याजेन स्तौति हे देवि त्वं मूढेव मां विभासि तत्र हेतुः या त्वं कटाक्षेषु सत्सु तथा भ्रुवोरपि सतरोः एतान् शरान् धनुश्च विभर्षि तव भ्रूकटाक्षयोरेव निखिलजनहननपर्याप्तत्वे धनु र्वाणग्रहणं व्यर्थ मेवेति भावः ॥ २९ ॥

अहो विमूढैः कविभिः प्रकल्पितं द्विवेर्थवादैकपरैरिदं मृधम्
समीहसे वा त्रिदिवं परेत्य चेन्न चेहसे नेन बहून्निहैवतान्

स्यादेतत् परंतु एतयो भ्रूकटाक्षरूपयो धंनुर्बाणयोः क्षेपणं नरकसाधनं एतयो धंनुर्बाणयोर्युद्धे प्रति भटं प्रति क्षेपणं स्वर्गसाधन मिति भेद इति तदाशयं बुद्धा अहो आश्चर्ये अति मूढैः कविभिः हतो वा प्राप्स्यसि स्वर्ग मित्या-द्यर्थवादवचनैकतत्परैः इदं युद्धं स्वर्गाय प्रकल्पितं अर्थवादमात्रमेवैतत् नतु वस्तुत इत्यर्थः स्यादेतत् अथापि तव न युक्तमित्याह अथ त्वं चेद्यदि परेत्य प्राणां स्त्यक्त्वा परलोकं प्राप्य एकमेव स्वर्गं कांक्षसे अथ च इहैव लोके जीवंत्येव अनेन महिषेण बहून् तान् स्वर्गान् किं न कांक्षसे मृत्यौ सत्ये कस्यैव स्वर्गस्य प्राप्तेरपि संशये जीवति च बहु स्वर्गप्राप्ते निश्चये चात्र तारतम्यं त्वयैव विवेचनीय मिति भावः ॥ ३० ॥

कृतं त्वया गोप्यधुना क्षमिष्यते प्रभुर्महामंत्रिचमूवधोद्भवम्
निसर्ग एवैष महात्मनां सदा स्मरंति नो हि श्रयतां महागसः

ननु तन्मं त्रिवधरूपमपराधं कृत्वा कथमद्य सामयुक्त मित्यतआह कृत मिति सः प्रभुर्महिषः महामंत्रिणां सेनायाश्च वधादुत्थितं त्वया कृतमपरा-धमपि अधुना त्वया श्रिते सति क्षमिष्यते ननु कोपं करिष्यतीत्यर्थः कुतः हि यतः महात्मनां एष स्वभाव एव सदा अस्ति यतः श्रयतां जनानां महागसः महापराधस्य न स्मरंति स्मृति योगे षष्ठी आगो पराधोमंतुश्चे-त्यमरः ॥ ३१ ॥

इयं त्रिलोक्य प्यधिपे श्रिते त्वया
विहाय सापत्न्य मिहा नुगैवते ।
अथापि सम्राड्भविता त्वदात्मजो
रणं करिष्यत्यरिभि स्स एवहि ॥ ३२ ॥

नन्वत्र सापत्न्यं चेत्तर्हि नरकादपि महत्कष्टमितात्यतआह इयमिति हे देवि त्वया त्रिलोक्या अधिपे महिषे श्रिते सति इयं त्रिलोक्यपि सापत्न्यं

विहाय इह तव अनुगा किंकरीव भविष्यति अचेतनया अपि त्रिलोक्या साप-
त्नेत्यक्ता तर्हि अन्यासां स चेतनानां किं वक्तव्यमिति भावः तथापि युद्ध एव
ममाभिलाषास्तीति चेदत आह अथानंतरं तस्मिन् स्थिते सति तव पुत्र समा
चक्रवर्ती भविष्यति स एव हि शत्रुभिः सह युद्धं करिष्यति तत् फलं तु त्वय्ये
वेत्यर्थः एतदेव युक्तं भविष्यति न तु तव युद्धं युक्तमिति भावः ॥ ३२ ॥

इति ब्रुवंतं त मुवाच चंडिका जड़ा भवंतो पि जड़े सतीश्वरे
विनिश्चिता वो वहुवाचि शूरता रणेतु दृष्टैव भवादृशा मिह

इतीति इत्येवं ब्रुवंतं तं चिचुराचं सा चंडिका उवाच हे मंत्रिन् भवतां
ईश्वरे महिषे जडे युक्तायुक्तविवेकरहिते सति भवंतो यूय मपि जडा एव म-
या निश्चिताः कामधेनु खरयो रिव संगस्य वैषम्यादिति पुर्वतो वोध्यम्
अथ तस्य युद्धरभसाय सर्वेषां कातरत्वं सूचयं त्याक्षिपति वः युष्माकं स्ववत्
वहुवाचि एव शूरता मया विनिश्चिता किं युद्धे नास्तीत्यतआह युद्धे तु दृष्टैव
मया भवादृशां युष्मत्सदृश्यानां दुर्मुखादीनां दृष्टैव यादृशी शूरतास्ति इ-
त्याक्षेपः ॥ ३३ ॥

तव प्रभो र्वा पि जिजीविषास्ति चे
त्तथेतरेषां तदधो हि गम्यताम् ।
वलावलेपो प्य थ कश्चना स्ति चे
दलं विलंवेन वलं वलंव्यताम् ॥ ३४ ॥

तवेति तव चिचुराचस्य प्रभोर्महिषस्य चापि तथा इतरेषामपि भटानां
यदि जीवितु मिच्छास्ति तर्हि अधः पाताल एव सर्वैः गम्यतां अथ चेत् वो
हृदि कश्चन वलस्य अवलेपो गर्भोस्ति तर्हि विलंवेन अलं विलंवो न कार्यः
स्वकीयं वलमेवावलंव्यतां आश्रीयतां ॥ ३४ ॥

इतिब्रुवाणा मभित स्ततान तां
स वाणसंतानतान मुग्रदृक् ।
शिवा विभेदाशु तदाशुगांश्च तं
चिरं तयो रित्थमभूद्रणोद्धुतः ॥ ३५ ॥

इतीति स उग्रदृक् चिक्षुराक्षः एवं ब्रुवाणां तां देवीं अभितःसर्वतः बाणानां संतानस्य पारंपर्यस्य वितानं उल्लोचं ततान विस्तारयामास अथशिवापि शीघ्रं तस्य बाणान् तं चिक्षुराक्षं च विभेदइत्थं परस्परं घात प्रति घातैरत्र प्रत्यस्त्रैश्च तयोःरणः चिरकालं अद्भुतः अभूत् अस्त्रोवितान मुल्लोच इत्यमरः ३५

त मेन मेनस्विन मुज्झित व्यथा
व्यधान् मृधे सा गदया विचेतनं ।
अथाभ्यगात्तां बलपार्ष्णिपालको
रुषा स ताम्रोप्यतिताम्रलोचनः ॥ ३६ ॥

तमिति तं एनं एनस्विनं पापिनं चिक्षुराक्षं सा त्यक्तपीडा भगवती युद्धे गदया विचेतनं मूर्च्छितं व्यधात् अकृत अथानन्तरं बलस्य पार्ष्णिपालकः पृष्टरक्षकः सः ताम्रोपि तां प्रति अभ्यगात् कीदृशः क्रोधेन अतिशयेन ताम्रे रक्ते लोचने यस्य ॥ ३६ ॥

समागतं तं तु समीक्ष्य चण्डिका
विहस्य सोल्लास मुवाच तद्रुषे ।
अहो किमर्थं महिषो रणेच वो
वृथाजिघांस त्यथ कीटसन्निभान् ॥ ३७ ॥

समागतमिति सा चण्डिकापि तं ताम्रं समागतं वीक्ष्य तस्य रोषाय सोल्लासं साक्षेपं यथा स्यात्तथा विहस्य उवाच अहो आश्चर्यं सःमहिषःवःयुष्मान् कीटतुल्यान् अत्र युद्धे प्रेषयित्वा किमर्थं वृथा हन्तुमिच्छति इत्याक्षेपः ॥ ३७

ममापि युष्मन्निधने मुधा श्रमः
शशान्निहत्येव हरे स्त्रपाकरः ।
गृहे स तिष्ठन् प्रकरोति किं पशु
र्मयि स्थितायां युधि जीवनोद्यमम् ॥ ३८ ॥

ममेति किं च युष्माकं कीटतुल्यानां हनने ममापि श्रमः मुधा व्यर्थ एव प्रत्युतत्रपाकरः लज्जाप्रदः कान् निहत्य कस्येव शशान् निहत्य करिनिकर

निहन्तुः सिंहस्येव अथ सः पशुर्महिषः मयि युद्धे स्थितायां सत्यां गृहे तिष्ठन् सन् किं जीवनस्य उद्यमं प्रकरोति युष्मान् प्रेषयित्वा जिघांसति स्वयं च जीवितु मिच्छति इत्याश्चर्यं तेनैव मम युद्धमुचितं न भवद्भिरिति ध्वनितम् ८३

तयेति रोषा त्स भृशं तिरस्कृतो मुमोच नाराचपरंपरांपराम्
लुलाव लोकेश्व्यपि लीलयैवतांविकृष्यकर्णान्तमुरु शरासनम्॥

तयेति इति तया रोषात् अत्ययं तिरस्कृतः सः ताम्रः परां उत्कृष्टां नाराचानां लोहमयवाणानां परंपरां तां प्रति मुमोच सा लोकेशी देव्यपि लीलयैव तां लुलाव चिच्छेद किं कृत्वा उरुं महांतं शरासनं कर्णपर्यन्तं विकृष्य प्रक्ष्वेडनास्तु नाराचा इत्यमरः ॥ ३९ ॥

सचिक्षुराक्षोपि विहायमूर्ततां मुहूर्तमात्रात्पुनरुत्थितो जवात्
उभावपीमांयुगपन्नि जघ्नतु र्घनाविवौर्वं निजशीकरैः शरैः ४०

सइति अथ सः चिक्षुराक्षोपि मुहूर्तमात्रात् मूर्च्छिततां विहाय पुनर्जवात् उत्थितः अथ उभावपि चिक्षुराक्षताम्रौ इमां देवीं युगपत् शरै र्निजघ्नतुः तथापि किंचित्कर्तुं न शेकतु रिति दर्शयितुं दृष्टान्त माह निज शीकरैः अम्बुकणैः और्वं वडवानलं मेघाविव मूर्च्छालेमूर्तमूर्च्छितावित्यमरः ॥ ४० ॥

रुषाद्विषोन्येप्यथ दष्ट दच्छदाः शरानहं पूर्विकिताः प्रचिक्षिपुः
तयापि सर्वेप्यथ तेक्षतावभुर्यथावसंते परिफुल्लकिंशुकाः ४१

न केवलं तावेव तां जघ्नतुः किंत्वन्येपीत्याह रुषेति अन्येपि शत्रवः तां प्रति क्रोधेन शरान् प्रचिक्षिपुः कीदृशाः दष्टादच्छदाः ओष्टायैः तथा अहं पूर्वं स्यामहं पूर्वंस्यामिति योधानां धावन क्रिया अहं पूर्विका सा जाता येषां तं तया देव्यापि ते सर्वेपि युधिशरैः क्षताः संतः बभुः कथं यथा वसन्त समये परिफुल्लाः किंशुका भान्ति अहं पूर्वमहं पूर्व मित्यहं पूर्विकास्त्रिया मित्यमरः ॥ ४१ ॥

अभिद्रुतां स्तानथ वीक्ष्य ताम्रदृगुषा स नाम्नो मुशलं दृढंकरे।
निधायसिंहस्य शिरसा ताडयन्मुहु र्वलीवर्दसमंननर्द च ४२

अभिद्रुतानिति अथ तान् सैनिकान् अभिद्रुतान् पलायिनात् वीक्ष्य क्रोधेन रक्तदृष्टिः सः ताम्रः दृढं मुसलं करे गृहीत्वा सिंहस्य शिरसि अताडयत् पुनश्च बलो वर्दस्य समं तुल्यं यथा भवति तथा ननर्द शब्दं कृतवान् ॥ ४२ ॥

तया स नर्दन् हि महासिना
लसत्करीटभाजा शिरसा वियोजितः ।
कबंध मप्यस्य दुरात्मनो मना
ग्विनृत्य भूमौ निपपात दारुवत् ॥ ४३ ॥

तयेति तया देव्या सः ताम्रः शब्दं कुर्वन्नेव महा खड्गेन कृत्वा लसत्किरीटभाजा शिरसा वियोजितः शिरो हीनः कृत इत्यर्थः अथ शिरसि छिन्नां अस्य दुरात्मनः ताम्रस्य कबंधमपि मनाक् किंचित्कालं विनृत्य दारुवत् भूमौ निपपात ॥ ४३ ॥

स चिक्षुराख्यो पि समीक्ष्य चुक्षुभे
क्षितौ क्षतं तं गतमंतकक्षयम् ।
अथा सि मुद्यम्य निहंतु मुद्यतो
हरिप्रियां नाग इवाभ्यगादिमाम् ॥ ४४ ॥

स इति अथ सः चिक्षुराख्योपि तं ताम्रं क्षितौक्षतं संतं यमनिवासं प्रतिगतं समीक्ष्य चुक्षुभे क्षोभं प्राप्तवान् अथानन्तरं खड्गं उद्यम्य हरिप्रियां महालक्ष्मीं निहन्तुं उद्यतः सन् अभ्यगात् कां क इव हरेः सिंहस्य प्रियां सिंहनीं हन्तुं नागः गज इव ॥ ४४ ॥

शिवापि संधाय तदीयपंचता
मचीक्लृपद्धन्वनि पंच सायकान् ।
कृपाण मेको द्वितयं तु सक्थिनी
चकर्त तेषु द्वय मस्य मस्तकम् ॥ ४५ ॥

शिवेति ततः शिवापि धन्वनि पंचमितान् सायकान् संधाय तस्य चिक्षुराख्यस्य पंचतां कालधर्मं मृत्युमिति यावत् अचीक्लृपत कल्पयामास

तेषां पंचानां तदंगच्छेदने विभागमाह तेषु पंचसुवाणेषु एकः तस्य कृपाणं यं खड्गमुद्यम्यागतः तं खड्गं चकर्त चिच्छेद द्वितयं इयं तस्य सक्थनी ऊरू चिच्छेद तथा इयं तु तस्य मस्तकं चिच्छेद स्यात्पंचता कालधर्मा दिष्टांतः प्रलयोत्ययः अन्तो नाशो द्वयोर्मृत्यु रित्यमरः ॥ ४५ ॥

अथेत्य मीश्याह तयो स्तयो स्तया
चमूः प्रमीतः प्रमिता स्रगुद्वहा।
विलप्य हाहेत्यपरे परेतरा
यमखादिवा सूनवधृत्य दुद्रुवुः ॥ ४६ ॥

अथेति इत्थं तया ईश्याहतयोः तयो र्दैत्ययोः सेना रक्तामुद्वहन्ती अप्रमिता असंख्याता प्रमीता मृता ततः अपरे अवशिष्टास्तु हाहेति विलप्य यममुखादिव प्राणान् गृहीत्वा दुद्रुवुः ॥ ४६ ॥

निशम्य तावप्यजया हतौ प्रभु
र्भयद्रुतै र्गद्गदया गिरोदितौ।
रुषासिलोमान मथा दिशद्युधे
तथा विडालाच्च मतीव दुःखितः ॥ ४७ ॥

निशम्येति सः प्रभु र्महिषः तावपि ताम्र चिक्षुराख्यौ अजया देव्या हतौ श्रुत्वाकोदृशौ भयद्रुतै र्भटैः गद्गदया गिरा उदितौ कथितौ अथअतीव दुःखितः सन् क्रोधेन असिलोमानं तथा विडालाक्षं युधे युद्धाय अदिशत् ॥ ४७ ॥

उदीर्य तावोमिति भर्तु रग्रतो
गतौ स्थिता यत्र मृतिस्सु रद्विषाम्।
अथाग्रणीभूय भयातिविह्वलो गिरा
सिलोमा श्लथया जगाद ताम् ॥ ४८ ॥

उदीर्येति तावपि स्वामिनोग्रे ओमंगीकृत मित्युक्त्वा यत्र स्थाने दैत्यानरमृतिरूपा देवी स्थिता तत्र गतौ अथ गत्वा तयो र्मध्ये असिलोमैव अग्रणीभूयां भयेनाति विह्वलः सन् श्लथया गिरा तां जगाद ॥ ४८ ॥

निहंसि नः कस्य कृते निरागसो
विभेषि न त्वं परतापजादघात्।
ददामि ते वांछसि चेद्धनादिकं
विधाय संधिं तदपेहि भामिनि ॥ ४९ ॥

किमित्यतआह निहंसीतिहे भामिनि कोपविशिष्टसौंदर्यवति अस्मान् निरपराधान् दैत्यान् कस्य कृते निहंसि ननु कोच दोष इत्यतआह त्वं परेषां तापदानजन्यात् पापात् न विभेषि इतिकाकुः न हिंस्यात्सर्वाभूतानीति श्रुतेः कोपि न हंतव्य इत्यर्थः अथ चेत् अस्मान् हत्वा धनादिकं वांछसि तर्हि किं हननेन तत् धनादिकं स्वयमेव यावत् वांछसि तावत् तुभ्यं ददामि तत्तस्मात् अस्माभिः संधिं विधाय यथेष्टं देशं अपेहि याहि सुंदरो रमणी रामा कोपनासैव भामिनी त्यमरः ॥ ४९ ॥

तथा भिधेयं सुधिया यथा सुखं
न चार्थसिद्धावपि दुःख मुद्भवेत् ॥
अहो विचारः कतरस्त्वया कृतः
स्वयं यतःक्रीत मपार्थ मेव तत् ॥ ५० ॥

तथेति हे देवि सुधिया जनेन तथा कार्यं यथा सुखं उद्भवेत् अथ च यथा अर्थसिद्धावपि सत्यां दुःखं न उद्भवेत् अहो आश्चर्यं त्वया कतरः विचारः कृतः व्यर्थमेव तत् दुःखं स्वयं क्रीतं गृहीत मित्यर्थः ॥ ५० ॥

वयः सुरूपं द्रविणं च भंगुरं
विचार्य कार्यं सुख मेव यद्भवेत्
शिरीषपुष्पा दपि ते मृदु स्तनु
र्विकार्त्यते स्त्रै रिति मेऽति विस्मयः ॥ ५१ ॥

वयइति हे देवि वयः आयुः सुरूपं सौंदर्यं द्रविणं धनं च भंगुरं विचार्य सुधिया सुखमेव यथा भवेत् तथा कार्यं अथ मया किं दुःखं गृहीत मित्यत आह हे देवि शिरीषस्य पुष्पादपि कोमला तव तनुः त्वया स्वयं अस्त्रैः वि कार्त्यते इत्ययं मम अति विस्मयोस्ति ॥ ५१ ॥

उवाच चैनं प्रति चंडिकापि गां
न मे विनार्थं श्रम एष दुर्मते ।
सदा हि लोके विचरामि देहिनां
समीचितुं न्याय मथेतरत्स्वयं ॥ ५२ ॥

उवाचेति अथैनं प्रति चंडिकापि गां वाचं उवाच हे दुर्मते एषा मम श्रमः अर्थं विना नास्ति किंतु सफल एवेत्यर्थः हि यत इह लोके देहिनां जीवानां न्यायं इतरत् अन्यायं च समीचितुं अहं सदैव विचरामि ना धुनैवेत्यर्थः गोः सौरभयो दृग्वाणवाग्भूष्वप्सु च भूम्नि चेति विश्वमेदिन्यौ ५२

न मे ऽस्ति सख्यं न च वैरता क्वचि-
द्दधामि साधूनितरान् वधाम्यहं ।
असाधुमेनं महिषं निहन्मि तत्
ससंधि मिच्छेदादिगच्छतु ह्यधः ॥ ५३ ॥

अथ न्यायान्यायं पश्यंती किं करोषीत्यतआह नेति तत्र साधून् सदाचरणशीलान् अहं दधामि अनुगृह्णामि इतरान् असाधून् वधामि एवं सति वैषम्यापत्ति रित्यतआह तत्र निग्रहानुग्रहयोः मम धर्मदंडभृतो भूपते रिव सख्यः तथा वै रता क्वचिदपि नास्ति लोकशासनायैवैष प्रयासोस्तीति भावः सामानरत उक्ता लक्ष्ये यो जयति तत्तस्मात् एनं असाधुं महिषं स्वव्रत पालनार्थं निहन्मि स चेत् मया संधि मिच्छेत् तर्हि अधः पातालं गच्छतु अन्यथा हन्मा वेत्यर्थः ॥ ५३ ॥

तदुक्त माकर्ण्य दुरत्ययं विधिं
वधार्य मतं युधि ता वथोद्यतौ
मुमोच सप्ताथ शरान्विडालदृ
कयाथ विद्ध स्त्रिभि रुज्जहा वसून् ॥ ५४ ॥

तदिति अथ तौ दैत्यौ तस्या उक्तं श्रुत्वा स्वदैवं च दुरत्ययं हृदि अवधार्य युद्धे मतं उद्यतौ अथादौ विडालाक्षः तां प्रति सप्तशरान् मुमोच अथ तयोः देव्या त्रिभिः शरैर्विद्धः प्राणान् तत्याज ॥ ५४ ॥

अथा सिलोमेतिजगाद तां शिवे
वनिश्चितं नः सकलान् हनिष्यसि।
तथा प्यधीनो स्मिदुरात्मनः प्रभोः
समिन्मखे वीरतया जुहो म्यसून् ॥ ५५ ॥

तथेति तस्मिन् मृते सति असिलोमा तां प्रति पुनर्जगाद हे शिवे एत न्मया विनिश्चितं अस्मान् सकलानपि त्वं हनिष्यसि इति ज्ञात्वापि स्वप्राण रक्षार्थं किं न पलायसे इत्यतआह तथा प्येवं सत्यपि दुरात्मनः प्रभो र्महिषस्य अहं अधीनोस्मि पलायिते सति सः स्वयं हनिष्यतीति भावः अतो ऽस्मिन् युद्ध यज्ञे वीरधर्म्ममेवाश्रित्य प्राणान् जुहोमि तव मरणाद्युद्धे मरणं वर मित्यर्थः तदुक्तं यत्र दूते मृतिर्नूनं युद्धे जीविनसंशयः तमेव कालं युद्धस्य प्रवदन्ति मनीषिण इति ॥ ५५ ॥

स इत्थमुक्त्वा विशिखान् शिखि प्रभा
तथा क्षिपत्सापि चखान तान् क्षणात्।
शरै रनीशेन तु योद्धुमंबया
गदा थ गुर्वी जगृहे सुरद्विषा ॥ ५६ ॥

सइति अथ स दैत्यः इत्थमुक्त्वा अग्निप्रभान् वाणान् अक्षिपत् सा- शिवापि तान् क्षणात् चिच्छेद अथ देव्या सह शरै र्युद्धं कर्तुं असमर्थेन तेन दैत्येन गुर्वी गदा जगृहे गृहीता ॥ ५६ ॥

अताडयत्केसरिणः शिरो भृशं
स दुर्मति र्दुःसहपातया तया
विधूय सिंहोपि शिरोमना ग्व्यथं
ददार शत्रोः करजै र्भुजान्तरम् ॥ ५७ ॥

अताडय दिति सः दुर्मतिः दुःसहः पातो यस्याः स्तया गदया सिंहस्य शिरः अत्यर्थं अताडयत् सः सिंहोपि तत्पातात् इषत् जाता पीडा यस्मिन् तादृशं शिरो विधूय कंपयित्वा तस्य शत्रो र्भुजांतरं वक्षः स्थल करजै र्नखै र्ददार ॥५७॥

अथो समुत्प्लुत्य स सिंहमस्तके
निधाय पादा वतिचित्रमाचरन्।
अदात्प्रहारं शिरसि श्रियो भृशं
महागदाया: प्रलयानलश्रिय: ॥ ५८ ॥

अथेति अथ स: समुत्प्लुत्य सिंहस्य मस्तके पादौ निधाय इत्यति चित्रं कर्म आचरन् श्रिय: महालक्ष्म्या: शिरसि तस्या महागदाया: प्रहारं अदात् कीदृश्या: प्रलयाग्नितुल्यप्रभाया: श्रिय इतो पुंतत्वादभापत्ते षष्ठीरूपं ॥ ५८

प्रवंचयित्वा खलु चंडिकापि तां
समापतंतीं श्रितलाघवक्रिया।
तदुत्तमांगं गिरिशृङ्ग मुच्छ्रितं
सितासि नेन्द्रो शनिनेवसाच्छिनत् ॥ ५९ ॥

प्रवंचयित्वेति चंडिकापि श्रिता लाघवस्य चापलस्य क्रिया ययातां समापतंतीं गदां प्रवंचयित्वा छलयित्वा तस्य असिलोम्न: उत्तमांगं शिर:असिना अच्छिनत् केन कं क इव अशनिना वज्रेण उच्छ्रितं गिरिशृङ्गं इन्द्र इव अपासु रिति स: गतप्राणोपि रणे वहूनां जीवानां गतप्राणतां कल्पयन् सन पपात, भूमावितिशेष: निर्नायकसैन्ये देव्या: प्रयासे व्यर्थ इति मत्वा सिंहा युयुधे इत्याह अथ अपरे तत्सैनिका: रणांगणे सिंहेन मृगसमूहा इव वेगेन हता: ॥ ६० ॥

अपासु रेवा सुभृता मयासुतां
रणे वहूनां स पपात कल्पयन्।
अथा परे केसरिणा रणांगने
कुरङ्ग सङ्घा इव रंहसा हता: ॥ ६० ॥

केषामिति स: सिंह: अत्युग्रत्वात् अपरो द्वितीय: विष्णोर्नृसिंहावतार इव तस्मिन् समरे चचार किं कुर्वन् केषांचित् रक्षसां नखै: शिरांसि दलयन्

केषांचित्कोष्टानि उदरमध्यानि विस्फोटयन् अन्यांश्च क्रोधेन रक्तया दृष्ट्यैव भ्रवयन् शवीकुर्वन् परांश्च नादैरेव मूर्छयन् परांश्च भ्रमणवेगेनैव भुवि निपातयन् परेषां च रक्तं पिबन् तथा उग्राःसटाधुन्वन् कंपयन्नन् ॥ ६१ ॥

निश्श्वासा न्मुमुचे श्रमातिचपलान्योन्युध्यमाना
शिवा ते तत्राशु सहस्रशोथ शतशः प्रादुर्बभूवु र्गणाः ।
ते वै पट्टिशभिंदिपालपरिघैर्यूथं ममंथु र्द्विषां
केचिच्छंखमृदंगवादनपरा भ्रेमु श्च वात्या इव ॥ ६२ ॥

निःश्वासानिति अथ सा युध्यमाना शिवा यान् श्रमेण अति चपलान् निःश्वासा एव तत्र युद्धे सहस्रशः शतशश्च गणाः प्रादुर्बभूवुः अथैषां कृत्यमाह ते वै गणाः पट्टिशाद्यैः शस्त्र विशेषैः शत्रूणां यूथं ममंथुः तेषां मध्ये केचित् शंख मृगङ्गवादनपरा आसन् अपरे तत्र वात्या इव भ्रेमुः ॥ ६२ ॥

आहूताः पूतिगंधं दिशि दिशि वहता गंधवाहेन वद्वा
मांसादिप्राज्यभोज्यां प्रति पितृवसतिं स्निग्धरक्तप्रवाहम् ।
तत्तज्जग्ध्वा च पीत्वा तुलमुद मभजन् प्राप्य पर्याप्तिमुच्चै
र्जन्येजन्या इवोग्रे वृकशुनकशिवाध्वांक्षगृध्रादिसंघाः ६३

आहूताइति अथ तस्मिन् जन्ये विवाहोत्सव प्रख्ये युद्धे वृकादीनां मांसाशिनां सङ्घाः तत्तत् मांसं रुधिरं च जग्ध्वा भक्षयित्वा पीत्वा च उच्चैःपर्याप्तिं तृप्तिं प्राप्य जन्या इव विवाहे वरस्य स्निग्धा इव अतुलां मुदमभजन् कीदृशाः दिशि दिशि पूतिगन्धं दुर्गंधं वहता गन्धवाहेन वायुना वद्धेव तां पितृवसतिं श्मशानभूमिं प्रति आहूताः कीदृशीं मांसादिकं प्राज्यं बहुलं भोज्यं यस्यां तथा स्निग्धः रक्तप्रवाहो यस्यां अथ च जन्या अपि विवाहकाले केनचित् दिशि दिशि प्रासवता जनेन वर पितुः वद्वा स्नुषायाः पितु र्वसतिं निवासंप्रति आहूता भवन्ति तत्र वसतौ च मांसादिकमपि प्राज्यं भोज्यं भवति तथा स्निग्धानां रक्तवर्णानां च वस्तूनां प्रवाह इव इति खण्डश्लेषोर्थान्तरध्वनिः जन्यं क्ली दे परिवादे संग्रामे च नपुंसकं वरस्निग्धे पुमानिति मेदिनी ॥ ६३ ॥

अगाधस्यानेकप्रतिहतमहानेकपगिरे
र्हृतामर्त्यारींद्रप्रकरविकिरन्मौक्तिमणेः ।
विशेषो नैवासौ त्समरजलधे श्चापि जलधेः
परंत्वस्मिन् प्रायो रुधिर मितरस्मिं स्तु सलिलम् । ६४

अगाधस्येति तदानीं तस्य समररूपस्य जलधेः जलधेश्च विशेषः भेदो नैवासीत् निर्विशेषतामेव दर्शयति कीदृशस्य तस्य तस्य च अगाधस्य अतुलस्पर्शस्य तथा अनेके प्रति हता ये महान्तः अनेकपाः गताः तएव गिरयो यत्र समुद्रे हि मैनाकादयो गिरयो निवसन्ति तथा हृतदैत्येंद्रसमूहेभ्यः विकिरन्त मौक्तिकामणयश्च यस्मिन् तस्य इदानीं किंचिद्विशेषमप्याह परन्तु एतावान् विशेषोस्ति अस्मिन्समरजलधौ प्रायो बाहुल्येन रुधिरमस्ति इतरस्मिन् जलधौ तु जलमस्ति व्यतिरेकालङ्कारः अनेकपो गजो नागे इत्यमरः ।। ६४ ॥

नन्नृतु रप्सरसां सरसं गणा अपरुषं पुरुकिंपुरुषाजगुः ।
सुमनसः सुमनश्च यवर्षिणी मुमुदिरेषु तदा स्थिता ॥ ६५॥

नन्नृतुरिति अथ तेषु सर्वेषु हतेषु सत्सुमुद्रेषु मेघेषु स्थिताः अप्सरसां उर्वश्यादीनां गणाः सरसं यथा स्यात्तथा नन्नृतुः तथा पुरवो बहवः किंपुरुषाः किन्नराः अपरुषं कोमलं यथा स्यात्तथा जगुः तथा पुष्पसमूहवर्षणशीलाःदेवा मुमुदिरे मोदं प्राप्ताः अत्र यमकानुप्रासयोः शब्दालङ्कारयोः संसृष्टिः ॥ ६५ ।

श्रीमाञ्शंभो श्चरणसदनीभूतहृच्छम्भुनाथो
लक्ष्मीनाथं ष्टविपरिस्पृढं देशिको सूतयं मां ।
तेनो क्लीते महिष निधने गीतलक्ष्मी चरित्रे
लक्ष्मीकाव्ये विरति मगमत्सर्गं एषोपि षष्ठः ॥ ७० ॥

श्री मानितयादि पूर्ववत् ॥ ६८ ॥

इति श्रीलक्ष्मीकाव्ये महिषमंत्रिमंत्रचिन्तनं नाम षष्ठः सर्गः ६

इति श्री लक्ष्मीकाव्यव्याख्यायां षष्ठः सर्गः ॥ ६ ॥

---

ॐ नमो विघ्नहर्त्रे वहुशो निहत्य युधि
देवरिपून् श्रमकर्षिता मृदुतनुस्तु इलम्।
इति मन्यमान इव भानु रथो
चरमाचलं समवलं वितवान्॥ १॥

ॐ नमो विघ्नहर्त्रे अस्मिन् सर्गे पुंरूपं भृतो महिषस्य श्रीमहालक्ष्म्या सह संलापो वर्णयिष्यते तत्र तत्सैन्यहननपूर्वकं युद्धोपरमेवर्ण्यमाने तस्य संध्यामेव संभवा त्तस्मात्प्रसंगिकं संध्यासमयमेव तावद्वर्णयति वहुश इति अथ तत्सैन्यप्रधानान्तरं भानुःसूर्य्यःइति मन्यमान इव चरमाचलं अस्तपर्वतं समवलं वितवान् इति किं इयं मृदुतनुः भगवती युधि वहुशः दैत्यान् निहत्य श्रमेण कर्षिता जातेति मन्ये तत्तस्मात् अलं युद्धोपरमोस्तो त्यर्थः धर्म्मयुद्धस्य यावत् सूर्य्यमेवौचित्यात् मयि अस्तङ्गते युद्धोपरमादस्याः श्रम शांति र्भविष्यतीति भावः अस्मिन् सर्गे प्रमिताक्षरा वृत्तम् प्रमिताक्षरासजससै रुदितेति लक्षणात्॥ १॥

दिवसे महामृध मदृष्टचरं तदुदीक्ष्यजातपुरुवीररसः।
अपि रोदसी विदधदात्मनिभे अथ शोणिमान मभजत्सरुषा।

दिवसइति अथास्ताचलासन्नः सः सूर्य्यः रुषेव शोणिमानं रक्तता मभजत् किंकुर्वन् रोदसी द्यावाभूमी अपि आत्मनि भेरक्ते एव विदधत् रोषहे तावप्युत्प्रेक्षते कीं० सूर्य्यः संपूर्णे दिने पूर्वं कदाचिदपि न दृष्टं महायुद्धं वीक्ष्यजातः पुरवीर रसो यस्य तादृश इव सन् अन्योपि शूरः युद्धं प्रेक्ष्य जातवीररसः सन् रुषा रक्ततां भजते॥ २॥

अनुरागितां वरविसृष्ट रथो करपातनं च महसां विरहः।
अनुभूयते स्म रविणापि दशा खलु वारुणीसमवगूहनजा॥३॥

अन्विति अपीति निश्चये तेन रविणा वारुण्याः पश्चिमदिशायाः समवगूहतान् संगात् जाता दशा अनुभूयते स्म अनुभूते त्यर्थः दशामेवाह यत

स्तस्मिन् अनुरागिता रक्तता आसीत् तथा अंवरस्याकाशस्य विसृष्टिस्त्यागः तथा करागां किरणानां इतस्ततः पातनं तथा महसां विरहः अभावः आसीत् अथ च रविणा रवि तुल्येनापि जनेन वारुण्याः मदिरायाः संगजन्या दशा अनुभूयते किमन्येनेति वक्तव्य मित्यर्थः यत स्तस्मिन् जने अनुरागः विषयेषु प्रीतिस्तद्वत्ता भवति तथा अंचरस्य वाससः त्यागः करयो र्हस्तयो रितस्ततः पातनं तथा तेजसां विरहश्च भवति सुरा प्रपक्व वारुणीत्यमरः ॥ ३ ॥

**अतिलोहितै र्निजकरैःपरितो रुधिरायमानसलिलंजलधिम्।**
**अपत न्निहंतु मिवदैत्यवलं समितेर्भ्रमाद्बहद् सृग्जलधेः॥ ४॥**

अथ तस्य सिन्धुपात मुत्प्रेक्षते अतीति अथ सः सूर्यः वहत् असृतो रक्तस्य जलधि र्यस्यां तस्याः समिते युद्धस्य भ्रमादिव जलधिं अपतत् किं कर्तुमिव तत्र युद्धजलधौ देव्या सह युध्यमानं दैत्यबलं निहंतुमिव ननु तत्र युद्ध जलधिभ्रान्तिः कथं जातेत्यत आह अतिरक्तैः निजकिरणैरेव सर्वतः रुधिरायमानं सलिलं यस्मिन् तं अयं भावः कविसंप्रदाये हि अस्तकाले सूर्यस्य सिन्धौ पातः प्रसिद्धः तत्र च पतन् सूर्य्य स्तं अतिरक्तैः स्वकरैः रुधिर तुल्य जलाविलं वीक्ष्य रक्तप्रायं युद्धं अमंस्त तत्र च देव्याः साहाय्यमिच्छन्निवदैत्य-सैन्यं हंतुं तत्रापतन् ॥ ४ ॥

**पतदातपत्र मिवदैत्यपते रसुरै रमानि विमनोभि रिनः।**
**सुमनोभि रेव तु दिगंतगत स्तनुभृत्प्रताप इव मातु रुरुः॥ ५**

पतदिति एषः इनः सूर्य्यः दैत्यपते र्महिषस्य पतन् आतपत्रं राज्यच्छत्र मिव विमनोभिः असुरैः अमानि एष एव सूर्य्यः देवैः दिगंतं प्राप्तः मूर्तिभृत् मातुर्देव्याः उरु र्महान् प्रतापः अमानि अत्रै कस्यापि पतनःसूर्य्यस्य चक्रवाला कृतेस्ते जोराशेश्च विमनस्तु तया सुमनस्तु तया दैत्यै र्देवैश्च पतच्छत्रदिगंतगत देवीप्रतापरूपतया दृष्टत्वादुल्लेखालंकारः ॥ ५ ॥

अनुगतो थ हरितो हरितो वदने मृडं करचयं रचयन् ।
उदगादगादुदयतो दयितस्तिमिरं निशो ऽनिश मयं शमयन् ॥

अन्विति अथ सूर्यास्तानंतरं उदयतः अगात् उदयाचलात् निशः दयितः प्रियः चंद्रः उदगात् किंकुर्वन् अनुरागतः रक्तत्वात् हरितः हरे रिंद्रस्येत्यर्थः हरितः दिशः प्राच्याः वदने मृडं किरणसमूहं रचयन् तथा अनिशं अजस्रं तिमिरं शमयन् सन् अन्योपि दयितः अनुरागतः प्रीत्या दयितायाः मुखे मृडं करं प्रसारयति हरित इति षष्ठयन्तात्तसिः ॥ ६ ॥

विततश्रि मूर्त मिव मातृ यशः
शुभ सूचि भाग्य मिव नाक सदाम् ।
उदियाय मंडल मचंड घृणे
रसुरप्रतापशिखिहंत सरः ॥ ७ ॥

वितत श्रोति तदेवोत्प्रेक्षते तस्य अचंड घृणे श्चंद्रस्य मंडलं उदियाय कि मिव वितता विस्तृता श्रो र्यस्य तादृशं मूर्तिमत् मातुर्देव्याः यश इव तथा भविष्यति शुभं सूचयितुं शीलमस्य तादृशं नाकसदां देवानां मूर्तं भाग्य मिव तथा असुराणां प्रतापरूपिणं शिखिनं अग्निं हंतीति तादृशं सुर इव ॥ ७ ॥

अतिकोमलैः सुखकरैः स्वकरैः
श्रितशोणतैः शिशुनिशाधिपतिः ।
जननीं स्पृशन् शिशिरमंद मरु
द्व्यजनेन खेद महच्छ्रमजम् ॥ ८ ॥

अतीति सः बालचंद्रः स्व किरणै र्जननीं स्पृशन्सन् सहायी भूतेन च शीतलमंदमरु द्व्यजनेन तस्याः युद्धश्रमजनं खेदं अहरत् कीं स्वकरैः अतिकोमलैःतथा स्पर्शेन सुखकरः तथा श्रिता शोणरक्ततायैः अन्योपि बालः अतिकोमलैः सुखकरैः रक्तैश्च स्वकरैः निज जननीं स्पृशन् सन् शीतलो मंदश्च मरुद्वायु र्यस्मिन् तादृशेन व्यजनेन कृत्वा तस्याः श्रमखेदं हरति ॥ ८ ॥

सकलां कलानिधि रथ क्षणदां
परिभुज्य काममति कामुक वत् ।
चरमां दशार्ध विशिखस्य दशां
प्रथयन्महांसि विजहावुषसि ॥ ९ ॥

सकलामिति अथेत्थं सः चंद्रः सकलामपि रात्रिं कामं स्वैरं अति कामुकवत् परिभुज्य अथ उषसि प्रातः काले महांसि तत्याज निस्तेजा बभूवः किं कुर्वन् दशार्धाः पंचमिता विशिखा बाणा यस्य तस्य कामस्य चरमां परिणाम कालीनां दशां प्रथयत् अतिकामं भुक्त्वा तदंते निस्तेजस्कता भवतीति ख्यापयन् सन् ॥ ९ ॥

क्षण मप्यमानि न सुरैः क्षणदा
क्षणदाचरैस्तुयुगतो प्यधि सा ।
द्युसदो जगुर्जयकथा मुदिता
अपरैः पराजय कथा व्यथिताः ॥ १० ॥

क्षणमिति सा क्षणदा रात्रिः सुरैः क्षणमपि न अमानि अथ सैव रात्रिः क्षणदाचरैर्दैत्यैः युगतः अपि अधिका अमानि अथ तस्यां द्युसदो देवाः मुदिताः संतः जयकथां जगुः अपरे दैत्यास्तु व्यथिताः संतो निजपराजयकथां जगुः ॥१० ॥

अथ मागधा इव षडंघ्रिगणा
स्सरसीजराजि मति सुप्तवतीम् ।
अरुणोदये सम ववोधयितुं
सुतरां जगुः प्रति वनं परितः ॥ ११ ॥

अथेति अथ अरुणोदये सति भ्रमराणां गणाः मागधाः स्तुतिपाठका इव अति सुप्तवतीं कमलानां पंक्तिं समववोधयितुं प्रतिबनं परितः सुतरां जगः ॥ ११ ॥

निजसोदरा न्सरसिजोदरगान्
परिमार्गयंत उषितान् न्चणदाम् ।
जगदुस्तरा मिव समाह्वयितुं
प्रियवांधवा भ्रमपराभ्रमराः ॥ १२ ॥

अथ तदेवान्यप्रकारेणाह निजेति ते भ्रमपराः भ्रमराः कमलानामु-दरेषु प्राप्तान् तत्रैव च सर्वां रात्रिं उषितान् निजभ्रातृन् अपरभ्रमरान्परिमा-र्गयंतः अन्वेषयंतः संतः अथ तान् समाहूयितुं आमंत्रयितु मिव अतिशयेन जगदुः कुत इत्यतआह की० ते प्रियाः बांधवा येषां ते ॥ १२ ॥

पुन रप्य यं समुदित स्सविता
समरो स्समां सम स्स्णो भविता
इति लिप्सयेव हृदि जातमुदो
बहु चक्रिरे कलकलं करटाः ॥ १३ ॥

पुनरिति इति लिप्सया वांछयेव हृदिजाता मुदो येषां ते करटाः कः काः बहुकलकलां चक्रिरे, इति किं अयं सूर्यः पुनरपि उदितः अथ च पुना समरः रुधिरै मांसैश्च स्निग्धो भविता अस्माकमति तृप्ति र्भविष्यतीति भावः ॥ १३ ॥

सकलां चमूं स महिषो पि हता
मनिशं निशम्य निशि योधमुखात् ।
अधुना करोमि क मुपाय महं
बहुधेति चेतसि चिचिंत खलः ॥ १४ ॥

इति प्रासंगिकान् संध्या रात्रिप्रातःकाला न्वर्णयित्वा प्रस्तुत मवतारयति सकलामिति अथ सः महिषोपि पलायितानां योधानां मुखात् सकलामपि सेनां अनिशं हतां रात्रौ श्रुत्वा अधुनाकं उपायं अहं करोमि इत्येवं बहुधैव सः खलः चेतसि चिन्तयामास ॥ १४ ॥

हृदये हतस्य विषमेषुशरैः पुनरेतया पि च कटाक्षशरैः।
धनुषः शरै रतिशितै स्च वह्निः समरे गति र्मम नु का भविता॥

अथ चेद्युद्धं कुर्यां तथापि न वर मित्याह हृदय इति ईदृशस्य मम युधि युध्यमानस्य नु इति वितर्के का गति र्भविता न कापीत्यर्थः कीदृशस्य हृदये विषमेषोः कामस्य शरै र्हतस्य पुनश्च संमुखं प्राप्ते सति एतया देव्या कटाक्ष शरै र्हतस्य वह्निश्च शरीरे धनुषो निस्सृतै रतितीक्ष्णैः शरै र्हतस्य एवं युगपदुत्तरोत्तरदुरासदत्रिविधशरतिकरनिपाताद्ध तस्य मम का गति र्भविष्यतीति भावः॥ १५॥

न भवे द्यथा च समरं स्मरतो
वशगा भवेन्मम च साप्यवशा।
त मुपाय मेति मम नो कि मुधी
रिति चिंतयैव स निनाय निशम्॥ १६॥

नेति अथ यथा येनोपायेन समरं न भवेत् यथा च कामतः अवशा सती मामवशगा भवेत् त मुपायं मम बुद्धि कस्मान्न प्राप्नोति इति चिन्तयैव स महिषो निशां निनाय॥ १६॥

स्फुरतिस्म धीरुषसि तस्य हरस्यथचित्ततत्परतये ति तदा।
भजते थ मां प्रभु मपीह न सा पशुरूप मित्य वगतं मनसा॥

स्फुरतिस्मेति [अथ प्रातः काले एकान्ते सति चित्तस्य तत्परतया तदा तस्य बुद्धि रितिस्फुरतिस्म प्रात स्समय एकान्तता चित्ततत्परता च प्रत्येकं धीस्फुरणे हेतुः किमु तत्र युगपत्सर्वेषां संभव इति भावः तावन्मां कस्मान्न भजते इत्यस्य हेतुं प्रति तस्य धीः स्फुरति स्मे त्याह अथ सा देवी मां प्रभु मपि यन्न भजते तत्पशुरूपमिति मत्वा न भजते इति मया मनसा सम्यक् निश्चितं॥ १७॥

न वलं न चाधि पतिता जगतां
वुधता कलासु निखिला स्वपिनो।

हरिणीदृशा मिह मुदं ददते
न च वेद वित्व मपि रूप मृते ॥ १८ ॥

इति निश्चित मर्थं लोकदृष्टप्राणेन दृढयति नेति इह लोके बलमपि न तथा जगता मधिपतिनापि न तथा निखिलासु कलासु बुधतापि न तथा वेदवित्वमपि नैव हरिणीदृशां स्त्रीणां मुदं ददते परन्तु केवलं रूपं सौंदर्यं विना सौंदर्यमेव स्त्रीणां मोदं दातु मलं नतु बलादिक मित्यर्थः रूपं विना सर्वगुणसंपत्तेपि मयि तस्या अनादरात् ॥ १८ ॥

रतिभर्तु रप्यथ सुविस्मयदां
पुरुषाकृतिं रुचिरतैकनिधिम् ।
विदधा म्यनर्घ्यमणिभिः कनकै
स्त इहं परिष्कृततरां परितः ॥ १९ ॥

अथ किं विधेय मिति चिन्तयन् स्वयमेवोपायं घटयति रतीति तत्तस्मात् पशुरूपं त्यक्त्वा अहं स्वमायया स्वकीयां पुरुषस्याकृतिं विदधामि कीदृशीं रति भर्तुः कामस्यापि आश्चर्यप्रदां यत्सौंदर्यं वीक्ष्य कामोपि विस्मितो भवेत् तथा रुचिरताया एकनिधिरूपां तथा अनर्घ्यैं र्मणिभिः कनकैश्च परितः परिष्कृततरा मतिशयेना ऽलंकृताम् ॥ १९ ॥

स इति व्यवस्य तदुदस्य वपुः खलु
माहिषं निखिलमायिकराट् ।
अतिचारु पौरुष मथो निरमा
दरलक्ष्मभिः क्षितिभुजा मखिलैः ॥ २० ॥

सइति निखिलेषु मायिकेषु राजा स महिषः इति निश्चित्य तच्च महिषं शरीरं त्यक्त्वा अतिसुंदरं पौरुषं शरीरं स्वस्य रचयामास की० राज्ञां अखिलैर्दरिद्रिद्भिरमितै र्वरलक्षणै रुपेतमिति शेषः ॥ २० ॥

वदनं हिमांशुवदनल्पविभं
सततं कपाटवदुरोविततम् ।

वृषमांसलांसयुगलं स्म तदुन्नति
शालिता लसति शालसमा ॥ २१ ॥

कानिचिद्दरलक्षणान्येवाह वदनमिति तस्य पुरुषाकृते र्महिषस्य मुखं चन्द्रवत् महाप्रभं लसतिस्म तथा उरो वक्षः स्थलं कपाटवत् सततं विस्तीर्णं लसतिस्म तथा वृष वत् मांसलं तस्य स्कन्धयुगलं लसतिस्म तथा तस्योन्नतिशालिताबृक्षसमा लसतिस्म ॥ २१ ॥

श्रवणांतिकप्रणयिनी नयने
भुजदंडगामि युगलं श्रवसोः।
अभि जानुनी गत मथा स्य
भुजद्वितयं च रत्नमुकराकृतिनी ॥ २२ ॥

श्रवणेति तस्य नयने कर्णसमीपगामिनी आस्तां, तस्य कर्णयो र्युगलं भुजदंडगामि आसीत्, अथ अस्य भुजद्वयं रत्नरूपा दर्पवत् आकृति र्ययो स्तेजानुनी प्रतिगतं आजानुलंबोत्यर्थः अत्रोत्तरोत्तरस्य पूर्वपूर्वविशेषणभावा देकावलि रलंकारः ॥ २२ ॥



मुकुटेन रत्नखचितेन महांगदहारकुण्डलचलत्कटकैः।
तपनीयतंतुरुचिरैर्वसनै र्विबभावनंग इव सोंगधरः ॥ २३ ॥

मुकुटेनेति सः महिषः रत्नखचितेन मुकुटेन महाङ्गदै र्हारैः कुण्डलै श्चलत्कटकैः स्वर्णतन्तुभिः रुचिरै र्वसनैश्चालंकृतः अङ्गधरो मूर्तिभृत् अनङ्गः काम इव विबभौ ॥ २३ ॥

वरवर्म्मवर्म्मणि च चर्म्म तिरः स्वकटौ महासि मपि सारसनं।
धनुरंसदेश उपतूण मभात्स निवध्य मूर्त इव वीररसः ॥ २४ ॥

वरेति स च वर्म्मणि शरीरे वरं वर्म्म कवचं निवध्य स्वकटौ च तिर स्तिर्य्यक्चर्म्म निवध्य तत्रैव च महासिं महाखड्गं सारसनं कंचुकदार्ढ्यार्थं मध्यकाय बन्धनपटादिं च निवध्य तथा स्कन्धदेशे धनुर्निवध्य कोदण्डं उपगतः समीप

स्तूणो निषंगो यस्य इत्थमायुधानि मूर्तिभृत् वीररस इवा भात् यतु मध्यम कंचुका बध्नन्ति तत्सारसन मित्यमर: ॥ २४ ॥

**न कयापि मे सुषमया विधुरं वदनं भवेन्मदनभाकदनम् ।**
**इति शंकया स निजभृत्यभृतंमुकुरं मुहुर्मुहु रवेक्षितवान् २५**

नेति इत्थं भूषणादिधारणानन्तरं कयापि परमशोभया रहितं मम कामशोभा कदनं वदनं न भवेत् इति शङ्कया स युंरूपभृ न्महिष: स्वसेवकेन धृतमादर्शं मुहुर्मुहुर्दृष्टवान् सुषमा परमा शोभेत्यमर: ॥ २५ ॥

**भृतका नथादिशदसौ स्वरथानयनाय सारथि मिहावह्वयत ।**
**इति ते निशम्य सह सारथिना रथमानया मथ बभूरुवुरुम् २६**

भृतकादिति अथासौ महिष: स्वरथानयनाय सारथिं सूतं इहाहूयत इति भृत्यान् अदिशत् तेपि भृत्या: इति तस्याज्ञां श्रुत्वा सारथिना सह महान्तं रथं तत्रानयामासु: ॥ २६ ॥

**शिरसो मुहुर्मुहु रधष्करणै र्नृपमादरा दभिनमन्नि रिव ।**
**चलदोष्टयुग्मकतया प्रभवे निजमुत्सुकै रिव रथं गदितुम् २७**

रथमेव वर्णयति शिरस इत्यादिभि स्त्रिभि: तावत्तृतीयपद्यस्य विनिवेदित मित्यस्य व्याख्या महिष स्तुरथ मुदीक्ष्य जहर्ष कीदृशं प्रणतेन सारथिना विनिवेदितं अयमयानीत इति तथोत्कृष्टया प्रभया सूर्यतुल्यं तथा सांयुगीनं रणयोग्यं तथा अखिलाना मसुराणां निधिरूपं सर्वास्त्रसम्पन्न मित्यर्थ: सांयुगीनो रणे साधु रित्यमर: ॥ २७ ॥

**स्फुटितै रदै: परिहसन्नि रिव श्रियमुच्चकै: श्रवस उज्वलभै: ।**
**वहनीयतामथ चतुर्भि रितं करणै: शरीर मिव चारुहयै: ॥२८**

पुन: कीदृशं रथमित्यपेक्षायां स्फुटितैरिति द्वितीयपद्य व्याख्या अथ चतुर्भिश्चारुभि र्हयै: वहनीयतां प्राप्तं कै: किमिव करणै र्मनो बुद्ध्यहंकारचित्त-भेदेन चतुर्भिरन्तष्करणै: शरीरमिव की० हयै:स्फुटितैर्वहि र्निष्कासितै: कत्वा उच्चै: श्रवस: श्रियं परिहसन्नि रिव अन्योपि निजाधमं परिहसन् दन्तान्वि-

कामयति अन्तःकरणचतुष्टयं तूक्तं वार्तिके मनो बुद्धिरहङ्कार श्चित्त चेतिच-
तुर्विधं सङ्कल्पाख्यं मनो रूपं बुद्धि निश्चियरूपिणी अभिमानात्मकस्तद्द
हङ्कारः प्रकीर्तितः अनुसन्धानरूपं च चित्त मित्यभिधीयत इति ॥ २८ ॥

**विनिवेदितं प्रणतसारथिनारुणसारथिप्रतिममुत्प्रभया।**
**अथ सांयुगीनमखिलाम्बुनिधिं महिषो जहर्ष त मुदीक्ष्य रथम्**

पुनः कीदृशे ईशे रित्यपेक्षायां शिरस इति प्रथम पद्यव्याख्या मुहुर्मुहुः
स्वशिरसः अधष्करणैः अधः पातनै र्नृपं महिषं आदरादभिनमन्निरिव अन्यो-
प्यादरा न्नमस्कुर्वन् पुनः पुनः शिरो नमयति तथा चलत् चंचलं ओष्टयोः
प्रोथयो र्युग्मं येषां ते चलदोष्टयुग्मका स्तत्तया प्रोथ इयचालनैने त्यर्थः
प्रभवे महिषाय निजं रथं गतिवेगं गदितु मिवोत्सुकैः अयं स्वयमेव वेत्ति
किमस्मत्कथनेः नेति न कथयंतीति ध्वनि अन्योपि स्वपराक्रमं वक्तु कामः
ओष्टौ चालयति ॥ २९ ॥

**अधिरुह्य तं सपदि सूत मथा दिशदर्यमारुण मिवाधिपतिः।**
**पुरतो वहि र्नय शतांग ममुं गमनीय युद्धधरणिं तरसा ॥ ३०**

अधिरुह्येति अथ सोधिपति र्महिषः तं रथं शीघ्रमारुह्य अथ सूत मा-
दिशत् कं क इव अरुण मनूरु सूर्य इव किमित्याह हे सारथे अमुं शतांगं रथं
पुरतो नगरा त्तरसा वहि र्नय वहि र्नीत्वा कुत्र गंतव्य मित्यतआह को॰
रथं गन्तु योग्या युद्धस्य धरणी र्यस्य शीघ्रं युद्धभूमिं प्रापयेत्यर्थः शतांगः
संदनो रथ इत्यमरः ॥ ३० ॥

**प्रकरोति यावदरुणोर्क रथं वहि राशु पूर्वनगतोभिनभः।**
**त ईर्ष्यये व स चकार रथं महिषस्य सारथि रपि स्वपुरात् ३१**

अथ महिषरथवहि र्नयनवर्णनव्याजेनारुणोदय पर्यन्तं पूर्वप्रतिपादित
प्रासङ्गानन्तरं वर्ण्यमानसूर्योदय मपराह्न प्रकरोतीति अथ अरुणो याव-
त्पूर्वाचलात् सूर्यरथं नभः प्रतिशीघ्रं वहिष्करोति तावदेव इतः तस्यारुणस्य

ईर्ष्ययेव स महिषस्य सारथिरपि स्वपुरात् रथं वहिश्चकार अयं सूर्य्यसारथि रथं त्वरितं त्वरयति अहं किमस्मान्न्यूनो यन्मन्दं त्वरयामीत्यर्थः ॥ ३१ ॥

**अथ चामरप्रभृतयः सचिवाश्चतुरंगचक्रपतयः परितः ।**
**तमहंयवो नुययु रायुधिनः पतयो दिशा मिव सुराधिपतिम् ॥**

अथेति तदनंतरं चामरादयः सचिवाः तं महिषं परितः अनुययुः कं के इव इन्द्रदिक्पाला इव की० ते सचिवा चत्वारि पत्यश्व मातंग रथरूपाण्यंगानि यस्य चक्रस्य सैन्यस्य पतयो नायकाः तथा अहं यवः आत्मन्यत्यंत वलवत्ताभिमानवंतः तथा आयुधिनो धृतशस्त्राः अहंकारवानहंयुः स्यादित्यमरः ॥ ३२ ॥

**अथ सुप्रयोगविशिखा जवना वरवर्मचर्मकरवालभृतः ।**
**धुरिपत्तयः समपदक्रमणै स्वलदुच्चभित्तय इवा तिवभुः ॥३३ ॥**

क्रमेण चतुरङ्गसेनाया गमन प्रकार माह अथेति अथ धुरि अग्रे पत्तयः समपदक्रमणैः चलंत्य दुच्चाभित्तय इव अतिशयेन वभुः अभूतोपमेयं कीदृशाः शोभिनाः प्रयोगा येषां ते सुप्रयोगा स्तादृशाः विशाखा येषां ते सम्यक्कृत शराभ्यासा इत्यर्थः तथा जवना वेगवन्तः तथा वरं वर्मचर्म करवालं खड्गं च विभ्रतीति ते कृतहस्तः सुप्रयोगविशिखः कृतपुंखवदित्यमरः प्रजवोजवनोजव इति च ॥ ३३ ॥

**अथसादिभि स्समवरुद्धरयाः सुदृढं खलीन मवयम्य हयाः ।**
**अवनिं तु किंचि दवलंव्य खरैः वंहुधाख एव ययु रग्रखुरैः ३४**

अथेति ततश्च सादिभिः अश्वारोहैः खलीनं कविकां लगामेति भाषया प्रसिद्धं सुदृढ मवयम्य निरुध्य समवरुद्धो रयो वेगो येषां ते हयाः तीक्ष्णैः स्वखुराग्रभागै र्भूमिं किंचिन्मात्रं अवलंव्य वहुधा आकाशे एव ययुः वेगान्निरुद्धा हि हया ऊर्ध्वमेव गच्छन्ति अश्वारोहास्तु सादिन इत्यमरः कविका तु खलीनो स्त्रीति च ॥ ३४ ॥

प्रचलंत्यनाश्रयमितस्य हया वय मत्र साश्रय मयुक्त मिदम् ।
इति बन्धु वत्सलतया खखुरोद्धत्त मुत्चिपं त्यभिनभः स्म रजः

प्रचलन्तीति ते हयाः स जातीयत्वात् बन्धुषु सूर्य्यहयेषु यावत्सलत तयैव स्वखुरैरुद्धतं रजः आकाशं प्रति उत्चिपन्ति स्म इति किं अमी सूर्य्यस्य हया नभोगामित्वात् अनाश्रयं प्रचलंति वयंत्वत्र भूम्यां साश्रयं प्रचलामः तदे-तत् अयुक्तमस्ति अत स्तत्रापरस्मत् खुरोद्धतरजसा भूमिर्भविष्यति तदा तेपि सा श्रयं प्रचलिष्यन्तीति भावः अन्योपि महान्साश्रय स्सन् स्वस्मा दधमं स्वबंधुं निराश्रयं वीच्य करुणया तस्य यथा कथं सा श्रयतां कल्पयतीति तेषां हया-नां सूर्य्यहयेभ्यो महत्त्वमपि ध्वनितम् ॥ ३५ ॥

परिक्षुद्भितस्य तुरगै स्समतां धरणीतलस्य सुविधाय गजः ।
प्रथमं खुरोद्धतरजो प्य नय न्करनिस्सृतै स्म नत मंबुकणैः ॥३६

परीति अथ गजातुरगैः परिक्षुद्भितस्य धरणीतलस्य समतां कृत्वा तेषां खुरेभ्य उद्धतं रजोपि करात् शुंडातो निस्सृतै रंबुकणैः प्रथमं अनयन् ॥ ३६

अतिचक्रचंक्रमणचीत्कृतिभि र्बधरीकृताखिलहरिद्वदनाः ।
श्रितमंथरेतरहया रमणीः सरणी रथाः पथि वितेनु रथ ॥ ३७

अतीति अथ रथाः पथिरमणी रुचिराः सरणीः यद्वती वितेनु विस्ता-रवन्तः की० रथाः अतिशयेन यत् चक्राणां चंक्रमणं तदुत्थिताभि श्चीत्कारै र्बधरी कृतान्यखिलनां हरितां दिशां वदनानि मुखानि यै स्तेतथाश्रिताः मंथरा मंदगामिन स्तदितरे शीघ्रगामिनो हया यै स्ते मंदगामी तु मंथर इ-त्यमरः ॥ ३७ ॥

पदवीं दृशोर्मम कदै ष्यति सा किमु भाषणीय मथ तत्पुरतः
इति चिंतयन्पथि हृदा महिषो धरणिं रणस्य सुददर्शपुरः ॥

पदवोमिति अथ सा महिषः पथि हृदा इति चिन्त न्सन् अग्रे रणस्य धरणिं किं सा देवो मम दृशोः पदवीं कदा एष्यति कदा तां द्रक्ष्यामी त्यर्थः अथ च तस्या अग्रे मम किं भाषणीयम् ॥ ३८ ॥

अमितप्रमीतरुधिराब्धिजुषा बहुपूति गंध मभितो वहता।
मरुते व यत्र न जनाः श्वसितुं प्रभवन्ति दूर मयि नष्टधियः॥

रणधरणि मेव वर्णयति अपितेति यत्र युद्धभूमौ जनाः एतादृशेन वायुनैव नष्ट बुद्धयः संतः दूरमपि श्वसितुं समर्था न भवंति किं वायुना अमिता नामसंख्यातानां प्रमितानां मृतानां रुधिररूपं अब्धिं जुषतीति नेन अत एव अभितो बहुं पूति गंधं दुर्गंधं वहता॥ ३९॥

हरिशङ्कराद्यभिनुता मथखे हरिकंधरार्पितपदांबुरुहाम्।
हरिणीदृशं समरमध्यगतां हरिकामिनीं भृश मुदैक्षत सः ४०

हरीति अथ स महिषः तां हरिकामिनीं महालक्ष्मीं भृश मत्यर्थं उदैक्षत कीदृशीं आकाशे हरि विष्णु रिंद्रो वा शंकरः शिव स्तदादिभि र्देवै रभिनुतां तथा हरेः सिंहस्य कंधरायां ग्रीवायां मर्पितं दत्तं पदांबुरुहं यया सिंहाधिरूढामित्यर्थः तथा हरिणी वत् दृशौ यस्याः तथा समरस्य मध्ये गतां प्राप्तां॥ ४२॥

किमियं सुधाकरमयी नु सुधा
भजते श्चिमन्थनभियेह तनुम्।
सुख मेव मूर्तिमदियं कि मथो
बहुधा व्यतर्कय दुदीक्ष्य स ताम्॥ ४१॥

किमिति सतामुद्वीक्ष्य चित्ते इति बहुधा व्यतर्कयत् इति किं इयं पुरः स्थिता सुधाकरमयो इंद्ररूपास्ति नु वितर्के यद्वा सुधैवास्ति नच इंदुरूपा सुधावा यदि भवे त्तर्हि सिंधुं त्यक्त्वा अत्र कथ मायातेत्यतआह इह अब्धि मथन भयेन तनुस्त्रीमूर्तिं भजते यदि सिंधौ निवसामि तर्हि पुन र्मंथन क्लेशो भविष्यतीति भयेनात्र स्त्रीरूपं कृत्वा समायाता किमिति भावः अथवा मूर्तिं मत् सुखमेव किमिय मस्ति॥ ४१॥

**अथ तत्पुरो निजसुरूप मसौ बहुधा प्रसाधित मपि छलतः ।**
**हसनीयतास्पद ममंस्त तदा क्व मणे रुचिः क्व च नु काचमणेः ।**

अथेति अथासौ महिषः निजसुरूपं छलतः बहुधा प्रसाधितं अलंकृतमपि तदा तस्याः सौन्दर्य्यस्याग्रे हसनीयतास्पदं कुरूपत्वाद्धास्यं कर्तुं योग्यं अमंस्त यतः मणेः रुचिः क्वास्ति अथ च छलेन निर्म्मितस्य काचमणेः रुचि क्वास्ति महदन्तर मित्यर्थः ॥ ४२ ॥

**जननीं गिरां प्रति गिरं जगदे ग्रथितां पुरैव पथिता मथ सः ।**
**अयि सुन्दरि श्रुतिपथा हृदि मे गिर माकलय्य कुरु काम मतः ॥**

जननीमिति अथ स महिषः तां गिरां जननीं भगवतीं प्रति गिरं जगदे कीदृशीं गिरं पथिपुरैव ग्रथितां गिरां जननीं प्रतिछलेन ग्रथितगिरा कथनं हास्यास्पद मेवेति ध्वनितं अयि सुन्दरि तावत् मम गिरं श्रुतिपथाकर्णमार्गेण हृदि आकलय्य विचार्य्य अतः परं कामं यथेच्छसि तथा कुरु ॥४३ ॥

**नितरां गभीरभवनीरनिधौ सुख मेव रत्न मुदितं विबुधैः ।**
**उभयो र्युजे स्तदपि संभवति प्रथिताथ सापि बहुधा जगति ४४**

किं गदसीत्यत आह नितरामिति अयि सुन्दरि नितरां गम्भीरे अस्मिन् संसारसमुद्रे विबुधैः सकलप्रयोजनमौलिभूतं सुखमेव रत्नं गदितं धर्म्मादि वर्ग स्यापि सुखसाधनत्वात् तत्सुखमपि उभयो र्युजेः संयोगादेव संभवति नत्वे केन सुखमनुभूयते सुखसाधनस्यान्यस्याभावात् अथ सा युजिरपि जगति उत्तम मध्यमादि भेदेन बहुधा प्रथिता ॥ ४४ ॥

**युजि रात्मजस्य जनकेन च या सहजैव सोत्तमतया गदिता ।**
**सहजेन या च सहजस्य युजिर्भुवि मध्यमा भवति कारणतः**

तन्नेदानेवाह युजिरिति जनकेन पित्रा या आत्मजस्य युजिःसातु सहसा स्वाभाविकैव उत्तमतया गदिता अथ सहजस्य भ्रातुः सहजेन या युजि साकारणतः स्वस्वप्रयोजननिवन्धनात् भुवि मध्यमा भवति ॥ ४५ ॥

अथ लोलुभै र्धनिनि या च कृता
क्षणभंगुरा भवति सा त्वधमा ।
सुहृदा मपि त्रिविधतास्ति युजि
र्मिलनं प्रसङ्गजनि नाविकयोः ॥ ४६ ॥

अथेति अथ धनिनि पुरुषे लोलुभै र्जनै र्या कृता युजिः सा तु अधमा भवति कुतः क्षणभङ्गुरत्वात् यावद्धनलाभवदेवतस्याः सम्भवात् अथ सुहृदां मित्राणामपि युजेः त्रिविधता अस्ति उत्तममध्यमाधमभेदेनेत्यर्थः अथ नाविकयोः नौकायां सङ्गतयो र्मिलनं युजिः तत् प्रसङ्गजनि कथितं तावन्मात्रप्रसङ्गादेव जायते तत्तु सदा स्थिरं भवति प्रयोजनाभावान्नात्रोत्तमत्वादिभेदोस्तीतिभावः इयानेवास्या विशेषः ॥ ४६ ॥

अथ तुल्यरूपगुणधीवयसो रतिसान्द्रहार्दसुधयार्द्रहृदो ।
इह नायिकारमणयोस्तु युजिःपरमोत्तमातिसुकृतैःप्रभवेत् ४६

अथ स्वप्रयोजनार्थं प्रसङ्गादानीतमर्थं प्रस्तुते योजयति अथेति हे सुन्दरि इह लोके नायिकारमणयो र्या मिथो युजिः सा तु पूर्वाभ्यो वैलक्षण्यात् परमोत्तमा अस्ति सा तु पूर्वजन्मनिसञ्चितैः अतिसुकृतैः पुण्यैः प्रभवेत् नान्यथे त्यर्थः कीदृशयो स्तयो स्तुल्यं रूपं गुणाः धीः वयश्च ययोः तथा अति सान्द्रं निविडं यत् हार्दं प्रेमतदेव सुधातया आर्द्रं क्लिन्नं हृत् ययोः ईदृशयोरेव युजिः अत्युत्तमानान्ययो रिति भावः इदं त्वावयो रेव दृश्यते नान्यत्रेति ध्वनितम् ४७

तव वेद्मि भाग्य मत एव परं पुरुपूर्वपुण्यनिचयैर्निचितम् ।
कथमन्यथा त्रिजगदेकपति र्वश मापुयामहमनाथ इव ४८ ॥

इदमेवाह तवेति हे सुन्दरि अत एव तव भाग्यं अहं परमुत्कृष्टं वेद्मि कीदृशं बहुभिः पूर्वजन्मभिः कृतैःपुण्यनिचयै र्निचितमेकीकृतं अन्यथा यदीदं न मन्यसे तदा अहं त्रिजगतामेकःपतिरपि सन् अनाथ इव तव वशं कथं आप्नुयां अत एवानुमीयते त्वया बहूनि पुण्यानि कृतानि अनुमानालङ्कारः ॥ ४८ ॥

अथ निर्जितादृश दिशा मधिपाः समखाशिनः शतमखप्रमुखाः
अभिषेचिताः खलु निजानुचरा अपि तत्पदेषु दययैवमया ४९

स्वप्रभावमपि दर्शयति अथेति देवैः सहिता इन्द्रादयो दशदिक्पाला अपि मया निर्जिताः अथ च तेषां पदेषु मयैव दयया प्रसादेन निजानुचराः अभिषेचिताः येषां पदाना मधिपा इन्द्रादय आसन् तेषां मम भृत्या इति स्वस्यातिमहत्वं सूचितम् ॥ ४९ ॥

स निजेच्छयैव विदधा म्यमिता सुरमर्त्यदैत्यभुजगादितनूः।
वरतो विधातु रयजातु न मे प्रलयेपि कालकलनेत्यमृषा ५०

नन्वेतावतीवास्त्वेव मयि शक्तिः किं त्वन्यान्तरीयापीत्याह स इति सोहं स्वेच्छयैव असंख्याताः सुरादीनां मूर्तीः स्वस्य विदधामि ननु त्वयि मृते वैधव्यं महत्कष्टं तत्राह हे सुन्दरि विधातु र्वरतः मम प्रलयेपि कदाचित् कालस्य कलना नास्ति इति अमृषा सत्यमेव जानीहीत्यर्थः ॥ ५० ॥

जहिहि स्वभाव मनवद्यतनो बहुदुःखसीम्नि समरे प्रसितम्।
अवलोचितं प्रकुरु भावमथो मयि सर्वतः परमसौख्यकरम् ५१

जहीति हे अनवद्य तनो अति सौंदर्यात् निर्दोषशरीरे बहुदुःखानां सीमरूपे समरे आसक्तं तत्स्वभावं जहि त्यज अथ अवलानां सुन्दरीणां योग्यं भावं कटाक्षभुजाक्षेपादि चेष्टामपि प्रकुरु कीदृशं सर्वतः परमसौख्यकरम् ॥ ५१ ॥

विवुधा वदन्ति यदिदं समरं विजये ऽर्थसिद्धिकृदथो यशसे।
निधने सति त्रिदिवदात्र नृणां श्रुतयःप्रमाण मिहतन्नमृषा ५२

नन्विहायामुत्रनिरतिशयानन्दप्रदं युद्धयज्ञं विहाय कथमैहिकमेव किञ्चित्सुखं श्रिये इतिचेत्सत्य मेवैतदित्याह विवुधाइति हे सुन्दरि यत् इदं समरं विजये सति नृणामर्थं सिद्धिकृत् तथा यशसे च भवति अथ निधने सति स्वर्गलोकप्रदं भवति इति यत् विवुधा वदन्ति तन्मृषानसत्यमेवेत्यर्थः कुतो यदस्मिन्नर्थे प्रमाणं श्रुतयः सन्ति ॥ ५२ ॥

स जय स्त्वया द्य जनितः समरे
विततात्र कीर्तिरपि ते जगति।
त्रिदिवं मया थ सह भुंक्ष्व चिरं
विफलः श्रमो न हि बुधैः क्रियते ॥ ५३ ॥

इति तस्य सत्यतां प्रतिपाद्य युक्त्या निरस्यति स इति हे सुन्दरि स ज-यस्तु त्वयाद्य मत्सैन्यवधं कृत्वा जनितः अथ च तव कीर्तिरपि जगति विस्तृ-ता जाता अथ तया सह चिरं कालं स्वर्गमपि भुंक्ष्व अथ चेत्पुनरपि तदेव चिकीर्षसि तन्न युक्तमित्याह हि यतः कार्ये निष्पन्ने सति विफलः श्रमः बुधै र्न क्रियते तदुक्तम् अर्के चे न्मधुविन्देत किमर्थं पर्वतं व्रजेत् इष्टस्यार्थस्य सिद्धौ कोविद्वान्यत्नमाचरे दिति अर्के गृहकोणे ॥ ५३ ॥

अथ मां हि जेतु मधुने च्छसि चे
त्पुरतो र्पितास्त्र मिह विद्धि जितम्।
नृपधर्म्म माश्रितवतै व मया
विधृता न्यमूनि न तु युद्धकृते ॥ ५४ ॥

नन्वेताञ्जित्वा मम कार्यं न निष्पन्नं किंत्वधुना त्वां जेतु मिच्छामीति चेत् तत्राह अथेति हे सुन्दरि अधुना चेन्मामेव जेतु मिच्छसि तर्हि तवाग्रे अर्पितान्यस्त्राणि येन तादृशं मां जितं जानीहि इत्युक्त्वा तदग्रे शस्त्राण्यर्पय दिति स्वयं बोध्यम् नन्वीदृशश्चे त्तव निश्चय आसीत्तर्हि कस्माद्गृतवानसीत्यत आह मया तु नृपधर्म्ममात्रं आश्रितवतैवामूनि शस्त्राणि धृतानि नतु युद्धकृते युद्धं विनापि राज्ञां शस्त्रधारणस्यौचित्त्यात् ॥ ५४ ॥

श्रम एष चेत् सुरमुदे क्रियते
न दुनोम्यतः प्रभृति तां स्तु कदा।
किमु वच्मि नेदृश मवाप दशां
महिषः पुराब्जजनुषो पि पुरः ॥ ५५ ॥

ननु सत्यमेतत् तथापि मद्वृत्ताद्देवा त्वयातिपीडिताः सन्ति तेषां प्रीत्यर्थं एतत्करोमीति चेत्तत्राह अमइति हे सुन्दरि एष अमर्ष त् सुराणां मुदे क्रियते तर्हि एष मे शपथः तान् सुरान् अतः प्रभृति कदापि न दुनोमि इत्युक्त्वा स्व-स्यातिदैन्यं द्योतयति हे सुन्दरि अहं किं वच्मि असौ महिषः ईदृशीं दैन्य-दशां पूर्वं तपोते ब्राह्मणोप्यग्रे न प्राप यादृशीं त्वदग्रे प्राप्त इत्यर्थः स्वस्यापि परवत्कथनं लौकिकव्यवहारेण बोध्यम् यद्वा अवापेति लिड्युत्तमपुरुषैकवचन मस्तु ईदृश मिति क्विबन्तत्वाद्धलन्तस्त्रीलिङ्गरूपं बोध्यम् ॥ ५६ ॥

बहुभि र्वचोभि रल मेष मया
रचितों जलि र्त्वनुनयाय पुरः ।
शरणागतं श्रितवतो महिमा
न हि शक्यते युगशते र्भणितुम् ॥ ५६ ॥

पुनरप्यति दैन्यं दर्शयन् स्वोक्ति मुपसंहरति बहुभिरिति हे सुंदरि बहु-भिर्वचोभिः अलंमत स्त्वदनुनयाय क्रोधाय नयाय एषोंजलि स्त्वदग्रे मया रचितः क्रोधं त्यज त्वां नमस्करोमीति भावः ननु त्वां श्रित्वा मम किं महत्वं तत्राह हि यतः शरणागतं जनं श्रितवतो जनस्य महिमा युगानां शतैरपि वक्तुं न शक्यते ॥ ५६ ॥

इति तं गिरा नवरतं विरतं
जगतीपतिं रतिपतिव्यथितम् ।
प्रतिवक्ति सा स्म जगतां जननी
प्रमिताक्षरातिरुचिरं वचनम् ॥ ५७ ॥

इतीति इत्येवं वाचा निरंतरं विरतं तं कामेन पोडितं राजानं महिषं प्रति सा जगतां जननी प्रमितैः प्रमाणनिष्पन्नै रक्षै रेवाक्षरै रतिरुचिरं वचनं वक्ति स्म अत्र प्रमिताक्षरेति वृत्तनामाप्यभिहितम् ॥ ५७ ॥

श्रुतिगोचरं कुरु ममापि वचः
श्रुतिगोचरं हित मृतं नृपते ।
त मनुत्तमं पुरुष मीश मृते
क मनुत्तमं पुरुष मन्य मियां ॥ ५८ ॥

किमित्यतआह श्रुतीति हे नृपते ममापि वचः श्रुतिगोचरं कुरु शृणु कीदृशे श्रुतीनां वेदानां गोचरं विषयं वेद प्रतिपादित मित्यर्थः तथा हि तं पथ्यं ऋतं सत्यं च किमितरतआह तं अनुत्तमं सर्वेभ्यो परुत्कृष्टं पुरुषं परमात्मान मीशं षडैश्वर्यसंपन्नं विना अन्यं प्राकृतं अनुत्तमं नीचं कं पुरुषं जनं इयां प्राप्नुयां को हि मणिंत्यक्त्वा काचं कांक्षते इति भावः पुरुषस्त्वात्मनि नरे पुन्नागीचेतिहैमः ॥ ५ ॥

यदुदीक्षणेन हि सृजा म्यखिलं
सदनाद्यनन्त इति यं श्रुतयः ।
चकिता गृणन्ति न च वाङ्मनसोः ।
पथियः स मे पति रजादिपतिः ॥ ५९ ॥

तत्प्रभावातिशयं दर्शयति यदिति यस्या पुंसः उदीक्षणेनैव अहं मूल प्रकृतिरूपा सती इद मखिलं महदादिकं सृजामि चुंबकमणि सन्निधानेन लोह वदित्यर्थः पंचश्रुतयः सदनाद्यनंत इति चकिताः सत्यो गृणंति कुत इतरतआह यश्च वाङ्मनसोः पथिविषयेनास्ति स अजो ब्रह्मा तदादीनां देवानां पति र्नियंता यस्माऽजामाया तदादीनां पतिः प्रवर्तको मम पति रस्ति तस्य जग ज्जन कत्वादहं जगज्जननीति दुष्टमति र्मयि न कार्येति भावः ॥ ५९ ॥

विविधा स्सदा स विदधाति तनू
रसतो निहन्तु मवितुं च सतः ।
परमात्मनो स्य परमास्मि तनू
रह मेव भेव दिवसाधिपतेः ॥ ६० ॥

तत्तत्रमाह विवधा इति स ईश्वरः असतो दुष्टजनान् निहंतुं सतः सत्पुरुषांश्च अवितुं रचितुं सदा युगे युगे विविधा स्तनूर्मूर्तीः विदधाति इति चेत्तर्हि स एव मूर्तिधृता दुष्टान्निहंतु त्वं किमर्थं मायातेति संशय निरासाय स्वस्य तादात्म्यं दर्शयति अस्य परमात्मनः परमा तनूर्मूर्तिं रहमेवास्मि तव स्थूलदृष्टे र्ज्ञापनार्थमेवैतावानपि भेदः प्रतिपादितः वस्तुतस्तु न कश्चिदपि भेदो स्तीति भावः अत एव दृष्टांत माह सूर्यस्य परमामूर्तिं प्रभेव यथा न भिद्यते तद्वदहमयोतत्रर्थः ॥ ६० ॥

**त इहं भवन्त ममरासुहृदं पतितं नृशंस मिह हन्तुमनाः ।**
**भवता हृताधिकृतिभिः कृतिभिः कृतये र्थितावि रभवंत्रिदिशैः॥**

एतत्सामान्यत उक्त्वा विशेषेण लक्ष्ये योजयति तदिति तस्मात् त्वां देवानां शत्रुं पतिं तं पापिनं नृशंसं क्रूरं च इह हंतुमनाः अहं आविरभवं कीदृशी त्वया हृताधिकृतिभिः कृतिभिः सत्कर्म कुशलैर्देवैः स्वकार्यार्थं प्रार्थिता ॥ ६१॥

**मृदु ते यदुक्त मसुरेश न तत् जीवितं परिहराम्यधुना ।**
**सखिता त्वया द्य विहिता तदधो विहरस्वकाममवहायदिवम्**

अथ दीन मपि मां किं निहंसीवेतत्रतत्राह मृद्विति हे असुरेश त्वया यद्यस्मात् मृदुकोमलं उक्तं तत्तस्मात् अह मधुना तव जीवितं न परिहरामि यत स्त्वयाच मया सह सखिता मैत्री विहिता रचिता तत्तस्मात् स्वर्गं तत्क्त्वा अधो लोकेषु यदिच्छं विहरस्व ॥ ६२ ॥

**अथ कश्चनास्ति हृदि शुष्मदः श्रय पौरुषं प्रलपनै स्त दलम् ।**
**महिषस्य तेद्यवलि मेत्य परं परिपूर्णतां रणमखोय मियात् ६३**

नन्वोदृक्प्रभावः सन् कथं कातरवदधोयामीतत्रतत्राह अथेति अथ यदि तव हृदि कश्चन शुष्मदाशौर्य्यस्य मदो गर्वोस्ति तर्हि पौरुषं स्वपराक्रमं श्रय प्रलपनै र्व्यर्थवचनै रलमस्तु अथ त्वयि पौरुषं श्रिते सति तव महिषस्य परं वलिं प्राप्य अयं युद्धरूपो यज्ञः परिपूर्णतां प्राप्नुयात् अङ्गभूतस्य वलिप्रभावात् यज्ञपरिपूर्त्यभावात् ॥ ६३ ॥

ननु रे नरेश किमसि त्वमष्टक्
न गताथवापि नृतनोः पशुता।
न यदीच्छसे परमबन्धमिमामपि
शृङ्खलात्स्त्रियमिह धिक्कृताम् ॥ ६४ ॥

अथ चेत्त्वमदृष्टित्वात्परमार्थतो मां जगज्जननीं न वेत्सि किन्तु प्राकृतस्त्रीव जानासि तथापि मत्परिग्रहणं न युक्तमित्याह नन्विति प्रश्ने हे नरेश किं त्वं अदृक् अन्धोसि अथवा तव नृतनो धृतपुरुषमूर्तेरपि सा नैसर्गिकी पशुता न गता यद्यस्मादिह लोके इमां स्त्रियमधिकृतामङ्गीकृतां शृंखलादपि परमं बन्धं न ईच्छसे तदुक्तं बद्धः कदाचिन्मुच्येत पुरुषो निगडैर्दृढैः पुत्रैर्दारैश्च सम्बद्धो न मुच्येत कदाचनेति ॥ ६४ ॥

इति दुर्गयोक्तवचसोऽर्थमसौ
स्मरमूढधीरनवलोड्य पुनः।
अभितां बभाण किमिदं ललने
कृत आग्रहः परमकश्मलदः ॥ ६५ ॥

इतीति असौ महिषः इत्येवं दुर्गया उक्तस्य वचसः अर्थं तात्पर्यं अनवलोड्य न सम्यग्विचार्य्य तत्र हेतुः स्मरमूढधीरिति अथ पुनः तां प्रति बभाण हे ललने इदं किं यत्त्वया परमकश्मलदो युद्धरूपः आग्रहः कृतः तदुक्त्यननुरूपेयं प्रत्युक्तिः अत एवाविचार्येत्युक्तम् ॥ ६५ ॥

अयि मालतीमृदुतनो त्वयि कः
कुसुमप्रहारमपि दातुमलम्।
अपि भासि योत्पलसमावयवै
र्मनसो पलासि किमयुक्तमिदम् ॥ ६६ ॥

ननु त्वमपि शूरोसि किं युद्धाद्विभेषीत्यत आह अयीति मालातय्या अपि कोमलकाये त्वयि कुसुमानां प्रहारमपि दातुं को निर्दयोऽलं समर्थो भवति त्वां मृद्वीं दृष्ट्वा कः प्रहारं दातुमिच्छतीत्यर्थः अथ या त्वं वहिरवयवै रुत्पल-

समा कोमला भासि सैव त्वं मनसा उपला पाषाणवत्कठिना किमसि इदमयुक्तं भातीत्यर्थः साधवो हि वहिरन्तश्च करूपा भवन्तीति ध्वनितम् ॥ ६६ ॥

भवतीं रणे जितवतो प्यथ मे
भुवि किं यशो मघवदादिजितः ।
अथ चेन्नयामि बलतो भवतीं
भविता सुखाय मम किं मदनः ॥ ६७

अथ चेदहमपि त्वद्वत्कठिनं चित्तं कृत्वा युधि त्वां जेष्यामि तथापि मम को लाभ इत्याह भवतीमिति अथ युद्धे त्वां स्त्रियं जितवतोपि मम इन्द्रादिजितो भुवि किं यशो भविष्यति यद्वा मम किमित्याक्षेपे समासः कुत्सितं यशः प्रत्युत अपयशो भविष्यतीति भावः अथ चेत् त्वां बलतो नयामि तर्हि बलकृतो मदनः कामः मम किं सुखाय भविता शृङ्गाररसभङ्गान्न सुखाय भवितेत्यर्थः ॥ ६ ॥

किं त्वां नो व्यथयत्यसौ मनसिजो दृष्ट्वा दयालु र्मृदुं
किं वा वारित एष हा मदरिभि र्हन्तुं भवन्तीं सुरैः ।
मय्येवा थ विसृज्य पंचविशिखान् रिक्तो स्य तूणोस्ति किं
य न्मा मर्थिन मीदृशं वरगुणं नो कांक्षसे क्षुद्रवत् ॥ ६८ ॥

अथैतां कामः किं न व्यथयतीति हृदि संशय्य तां प्रति स्पष्ट माह किमिति असौ कामस्त्वां मृदुं दृष्ट्वा किं दयालु र्जातः अत एव शरै स्त्वां न व्यथयति यद्वा एष कामः मदरिभिः मत्कार्यविध्वंसकै र्देवै स्त्वां हन्तुं किं वारितोस्ति एषा मद्विषमनः कर्षिणी त्वया न हन्तव्येति वारित इत्यर्थः किं वा वारिभिः ममारिभि स्स हतकै स्त्वां हन्त हन्तुं सुरैः । अथवा असौ मय्येव पंचसंख्याकान् स्वबाणान् विसृज्याधुनास्य तूणो निषङ्गः किं रिक्तः शून्यो जातः शून्यनिषङ्गत्वादधुना त्वां हन्तुमसमर्थो जात इत्यर्थः यद्यस्मात् ईदृशं वरगुण मर्थिनं याचकं मां क्षुद्रवत् नो कांक्षसे कामस्य पंचबाणास्तू क्ताः उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा संमोहनश्च कामस्य पंचबाणाः प्रकीर्तिता इति ॥ ६८ ॥

कुशल मति रसज्ञं मां विहाया द्य मोहा
त्पुन रथ शठ मन्यं कंचि देत्य स्मरार्ता।
उदित मिद ममंदं तर्हि मन्दोदरीव स्वय
मविदुषि पश्चात्तप्तासि त्वं स्मरंती॥ ६८॥

न केवलं मयि तप्तके ममैव हानिः किन्तु तवापीतयाह कुशलमिति हे अविदुषि मूढे अद्य कुशलं अतिरसज्ञं च मां मोहात् अज्ञानात् विहाय अथ पुनः कालान्तरे स्मरार्ता सती कंचिदन्यं शठं मूर्खं प्राप्य तदिदममंदं हितं मम उदितं संस्मरन्ती सती त्वं मन्दोदरीव स्वयं पश्चात्तप्तासि यथा मन्दोदरी काचिन्नृप पुत्री कुशलं भूपं मोहा त्यक्त्वा पुनः कामार्ता कंचिद्रूपं प्राप्य सखीनां वचः स्मरन्ती पश्चात्तापं चकार तद्वत्त्वमपि भविष्यसीतयर्थः एतदेवोपरिष्टाद्वर्णयिष्यते॥ ६८॥

श्रीमाञ्शंभो श्चरणसदनीभूतहृ च्छम्भुनाथो
लक्ष्मीनाथं कविपरिसृढं देशकोसूत यं मां।
तेनो क्षीते महिष निधने गीत लक्ष्मी चरित्रे
लक्ष्मीकाव्ये विरति मगमत्सर्ग एषोष्टमोपि॥ ७०॥

श्री मानितयादि पूर्ववत्॥ ६८॥

इतिश्रीलक्ष्मीकाव्ये भगवती महिष संवादोनामाष्टमःसर्गः ८

इति श्री लक्ष्मीकाव्यव्याख्याया मष्टमः सर्गः॥ ८॥

---

सा सर्वगाप्युदित मस्य निशम्य सम्यक्
पप्रच्छ देवरिपुपुङ्गव मन्नव त्तम् ।
कस्यात्मजा कमथ भूपवरं जहौ सा
मन्दोदरि गदसि यां शठ मापकं वा ॥१॥

ॐ नमो विघ्नहर्त्रे अस्मिन्सर्गे मन्दोदरी वृत्तं वर्णयिष्यति तावदुदितं निशम्य भगवती पप्रच्छेत्याह सेति सा भगवती अस्य महिषस्य मन्दोदरी दृष्टान्तरूप मुदितं निशम्य सर्वगापि गमेर्ज्ञानार्थत्वेन सर्वज्ञापीत्यर्थः तं दैत्येंद्रं अन्नवत् सम्यक् विस्तरेण पप्रच्छ किमित्याह हे महिष यां त्वं मन्दोदरीं गदसि सा कस्य आत्मजा पुत्री वभूव अथ कं भूपवरं जहौ तत्याज अथ च पुनः कामार्ता सती कं शठं मूर्खं प्राप इति वद अस्मिन्सर्गे वसन्ततिलका वृत्तम् उक्तावसन्ततिलका नभजाजगौग इति लक्षणात् ॥ १ ॥

पृच्छत्यसौ स्मितपुरस्सर मादरा न्मां
जातस्पृहा मयि तदित्य वगत्य मत्या ।
प्रत्वेतिहास मिति हाससमंचितास्य
स्ता मूचिवानुचितगुंफितचारुवर्णम् ॥ २ ॥

पृच्छतीति असौ देवी यस्मात् ईषद्धासपूर्वकं आदरात् मां पृच्छति तस्मात्मयि जाता स्पृहा यस्या स्तादृशी ज्ञातेति मन्ये स महिषः इति बुद्ध्या निश्चित्य हासेन स मंचितास्यः सन् तां प्रति इति वक्ष्यमाणं पुरातन मिति हास मूचिवान् कीदृशं तद्रंजनाय उचितेषु स्थानेषु गुम्फितानि ग्रथितानि चारूणि वर्णानि यस्मिन् यद्वा वचनक्रियाविशेषण मिदम् ॥ २ ॥

आसी दसीमगुणमंडितपंडितेंद्राधिष्ठ्ये
यता मुपगतो धनिनां निधानम् ।
सर्वर्तुकालफलशालिविशालशालः
ख्यातो जने जनपदः खलु सिंहलाख्यः ॥ ३ ॥

तावत्कथावतरणाय देशनाम संकीर्तयति आसीदिति हे सुन्दरि अस्मिन् लोके प्रसिद्धः कश्चित् सिंहल नामा जनपदो देश आसीत् कीदृशः असीम गुणै र्मण्डितानां पण्डितेन्द्राणां अधिष्ठानता मुपगतः यत्रेदृशाः निवसन्तीतर्थः तथा धनिनां निधानं निधिः तथा सर्वेषु वसन्तादिषु ऋतुषु फलशालिनो विशाला वृक्षा यस्मिन् नीवृज्जनपदोदेश विषया वितश्मरः ॥ ३ ॥

तस्मिन रराज सकलावनिपालचक्र
चूडामणि र्धरणिपाल न सक्तचेताः ।
जेता द्विषां सुकृतवान्यशसा वदातो
दाता र्थतो प्य धिक मर्थिषु चन्द्रसेनः ॥ ४ ॥

तस्मिन्निति तस्मिन् देशे चन्द्रसेन नामा राजा रराज की० सकलाना मवनिपालानां व्रजस्य चक्रस्य चूडामणिः तथा धरण्याः पालने एव सक्तं चेतो यस्य तथा द्विषां जेता सुकृतवांश्च यशसा अवदात उज्वलः तथा अर्थिषु याचकेषु अर्थतः तैः कृतयाचनातोप्यधिकं दाता यथा केनचित् शतमर्थिन तस्मै सहस्रं ददौ चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथांगयो रिति हैमः ॥ ४

यस्मिन् प्रशासति भुवं श्रुतिवद्वरिष्टे
न्यायेन दंडभृति सर्वगुणप्रवीणे ।
कीदृग्भव त्यहह दुःख मदृष्टवत्तच्छा
स्त्रे षु दृष्ट मपि कल्पयतिस्म लोका ॥ ५ ॥

यस्मिन्निति यस्मिन् श्रुतिवित्सु वरिष्टे न्यायेन च दंडभृति सर्वगुणेषु चन्द्रसेने भुवं लक्षणया तन्निवासिजनं प्रशासति सति लोको जनः शास्त्रेषु प्रतिपद्यमानं दृष्टमपि दुःखं अहहे त्याश्चर्ये दुःखं कीदृशं भवति इति अदृष्टवत्कल्पयति स्म यद्वा अदृष्टवत् दैववत् यथा दैवं शास्त्रेषु दृष्टमपि कीदृशं दैवं भवतीति लोकः कल्पयति तस्यराज्ये दुःखं कुत्रापि नासीदितर्थः ॥ ५ ॥

गोत्रं श्रितं च स सदा वद मंद वंधुः
देवा न यष्ट न पपावपि वारुणीं सः ।

ना स्मिन्वभूव मृगया न रति र्न भारं
पुंसां ददौ शिरसि यज्ञततिं च तेने

अथास्य श्लेषेणाष्टदिक्पालेभ्योप्यधिकमाह गोत्रमिति स चन्द्रसेन: गोत्रं स्वकुलं सदा आवत् ररक्ष अथ इन्द्रादप्यधिको भवत् इन्द्रो हि गोत्राणांपर्वतानां नाशकत्वात् गोत्रहेति नाम्ना प्रसिद्ध: तथा श्रित माश्रितमप्यावत् अतोग्ने रधिक: अग्निर्हि आश्रया शतया प्रसिद्ध: तथा स अमंदा अनिर्भाग्या कुशला वा वंधयो यस्य ताहृश आसीत् अतो यमाधिक: यमो हि मन्दस्य शनैश्चरस्य वन्धु र्भ्रातास्ति तथा सदेवान् अयष्ट पूजयामास अतो नैर्ऋताधिक: स हि देवविरोधक: अथ स पंचमहापातकेषु गणितां वारुणीं मदिरामपि न पपौ अतो वरुणाधिक: स हि वारुणीं पश्चिमदिशं ययौ पालयामास तथा ऽस्मिन् राज्ञि या जीववधरूपा मृगया तथा रति: कामाभिलाषापि न बभूव अतो वायो रधिक: स हि मृगाणां याने वाहनेरति: प्रीति र्यस्य ताहृशोस्ति तथा स पुंसां शिरसि दंडरूपं भारं न ददौ अत: कुवेरादधिक: स हि नरवाहनत्वात् पुंसां शिरसि भारं ददाति अथ च स राजा यज्ञानां ततिं वितेने विस्तारितवान् अतईशादधिको भवत् स हि यज्ञध्वंसितया प्रसिद्ध: गोत्र: शैले गोत्रं कुलाख्ययो रिति हैम: मंद स्तोक्ण च मूर्खे च स्वैरे चाभाग्यरोगिणो: अल्पे च त्रिषु पुंसि स्या इत्तिजाल रे शनार्विति विश्व: ॥ ६ ॥

तस्या नुरूपगुणरूपवदान्यताढ्या
साध्वीगणस्य पुरतो गणनीयकीर्तिः ।
राज्ञी शुभा गुणवतीति यथार्थनाम्नी
छायेव सा भव दिनस्य सदानुकूला ॥ ७ ॥

तस्येति तस्य राज्ञो गुणवतीति यथार्थनाम्नी शुभाराज्ञी सूर्यस्येछादेव सदानुकूला ऽभवत् सूर्यस्य हि छायेति नाम पत्नी अस्ति यद्वा तस्य इनस्य स्वामिन:सा छायेवानुकूला अभवत् [कीदृशी तस्य राज्ञ:अनुरूपा रूप्या गुणा मर्यादादय: रूपं सौंदर्यं वदान्यता ऽौदार्यं च ताभिराढ्या युक्ता तथा साध्व

गणश्च येनागणनीया कीर्ति र्यस्य: यदा यदा लोके पतिव्रतानां गणन मकारि तदा तदा सा ऽग्रे गणनीयासोदित्यर्थः ॥ ७ ॥

प्रत्यायगं प्रतिवनं प्रति चंद्रशालं
प्रत्यालयं प्रतिवरप्रमदावनं च ।
रेमे तया बहुसमाःस्वसमानकांत्या
रत्यायथा रतिपतिः स जगत्यधीशः ॥ ८ ॥

प्रतीति स जगत्यधीशः स्वसमाना कांति र्यस्या स्तया राज्ञ्या सह आयगां आपगां प्रति एवं प्रतिवनं चन्द्रशाला शिरोगृहं तां प्रति च तथा प्रत्यालयं तथा वरं यत्प्रमदावनं अन्तः पुरोचितं उपवनं तत्तत्प्रति च बहुसमा-बहु वर्षाणि रेमे कया क इव रत्या रतिपति रिव समा इति काला ध्वनो-र्नैरंतर्ये इति द्वितीया स्यादेतदेव प्रमदावन मन्तः पुरोचित मित्यमरः ॥ ८ ॥

गर्भे थ सा प्रथमके सुषुवे कुमारीं
चंद्राननां कुमुदिनी सरसीव रम्यां ।
तंतो बिंससय यद भू त्तनु मध्य मस्या
मंदोदरीति स नृपो कृत नाम तस्मात् ॥ ९ ॥

गर्भेइति सा गुणवती राज्ञी प्रथमके गर्भे चन्द्राननां कुमारीं सुषुवे कां केव रम्यां कुमुदिनीं सरसीव अथ यस्माद स्याः कुमार्या मध्यं बिससय मृणालस्य तंतोरपि तनु सूक्ष्म मभूत् तस्मात्तभूयस्तस्या नाम मन्दोदरीति अकृत मल्प मुदरं यस्या इति निरुक्तिः ॥ ९ ॥

इंदोः कले व ववृधे थ दिने दिने सा
तां वीक्ष्य सिंधु रिव भूमिपति र्ननंद
कौमारयौवनजसंधि गतां वरार्हां
दृष्ट्वा थ तां स मनसा समवाप चिंतां ॥ १० ॥

इंदोरिति अथ सा मन्दोदरी सितपक्षे इन्दोः कलेव दिने दिने ववृधे अथ सः राज्ञा तां वर्द्धमानां वीक्ष्य सिन्धु रिव ननंद यथा वर्धमाना मिन्दुकलां

वीक्ष्य समुद्रो मोदते तद्वदित्यर्थः अथ स राजा कौमारयौवनाख्याभ्यां ववस्था विशेषाभ्यां जातो यः सन्धि स्तस्मिन्प्राप्तां तां पुत्रीं वरयोग्यां वीक्ष्य मनसा चिन्ता मवाप ॥ १० ॥

अन्वेषणाय नृपलक्ष्मजुषो वरस्य
सत्कर्मठं निजपुरोधस मादिदेश
आज्ञा मिमां रहसि सो प्यधिगत्य राज्ञः
पश्यन्बहून्नृपसुता न्विचचार देशान् ॥ ११ ॥

अन्विति अथ द्वात्रिंशन्नृपलक्षणवतो वरस्यान्वेषणाय सत्कर्म्मणि कुशलं स पुरोहित मादिदेश स पुरोहितोपि इति नृपाज्ञां रहसि एकान्ते अधिगत्य तथेत्यङ्गीकृत्य बहून् तादृशलक्षणोपेतान् नृपसुतान् पश्यन्सन् बहून् देशान् विचचार सत्कर्म्मणि घटते इति सत्कर्म्मठः कर्म्मणि घटी ठच् ॥ ११ ॥

आगत्य सो थ नृपतिं जगदे द्विजेंद्रो
राजेंद्र हक सुखकरो जयतींद्रदेशः
तस्या धिप स्त्व मिव धर्मधनः सुधन्वा
नाम्ना विभाति धृतखड्ग निषंगधन्वा ॥ ११ ॥

आगत्येति अथ स द्विजेन्द्रो देशान् भ्रमित्वा पुनश्चागत्य तं नृपतिं चन्द्रसेनं जगदे हे राजेन्द्र दृशोः सुखकरः कश्चिदिन्द्रदेशः जयति सर्वोत्कर्षेण परिवर्तते तस्याधिप स्त्वमिव यथा त्वमसि तथाधर्म्म एव धनं यस्य तादृशः सुधन्वेति नाम्ना विभाति कीदृशो धृतः खड्गो निषङ्गो धनुश्च येन ॥ १२ ॥

तस्या त्मजो खिलकलाकुशलोस्ति
कंबुग्रीवाभिधः श्रुतिमहार्णवतीर्णपारा
द्वात्रिंशता नृपति लक्ष्मभिरीक्षणीयो
युक्त स्त्वते दुहितु रस्ति पति र्वरीयान् ॥ १३ ॥

तस्येति तस्य सुधन्वनः पुत्रः कंबुग्रीवेति नामास्ति कीदृशः अखिलासु कलासु कुशलः तथा श्रुतिरूपस्य महार्णवस्य तीर्णः पारो येन सर्ववेद पारगामीत्यर्थः

तथा द्वात्रिंशत् मिते नृपाणां लक्षणे रोचणीयः दर्शनीयः स एव वरीयान् तव पुत्र्या युक्तो योग्यः पतिरस्ति ॥ १३ ॥

श्रुत्वा नृपो तिमुदितो गदितं तदीयं
चख्यौ समस्त मपि वृत्त मथो महिष्यै
प्राहस्म सापि तनया मयि पुत्रि
कंबु ग्रीवाय दित्सति नृपो भवतीं वराय ॥ १४ ॥

श्रुत्वेति स नृप स्तदीयं गदितं वचः श्रुत्वा अति मुदितः सन् अथ समस्तमपि वृत्तं महिष्यै गुणवत्यै चख्यौ सा गुणवत्यपि तनयां मंदोदरीं प्राहस्म अयि पुत्रि त्वां राजा कुंबुग्रीवाभिधाय वराय जामात्रे दातु मिच्छति ॥१४

आकर्ण्य से ति जगदे जननीं विरक्ता
मात र्न मे पतिपरिग्रहणे स्ति लिप्सा
स्वात्तंत्र्य मेव सुख मत्र वदंति मोक्षं
यत्पारतंत्र्य मतिवंध मिदं च दुःखम् ॥ १५ ॥

आकर्ण्येति सा मन्दोदरी इत्याकर्ण्य विषयेभ्यो विरक्ता सती जननीं जगदे हे मातः मम पतिपरिग्रहणे वांच्छा नास्ति ननु पतिं विना कथं सुख प्राप्स्यसीत्यतआह बुधा अत्र यत् स्वातंत्र्यं स्वेच्छाविहारित्वं तदेव सुखं मोक्षं च वदन्ति यच्चात्पारतंत्र्य तत् अतिवंधं अत एव दुःखं वदन्ति ॥ १५ ॥

पत्या समं परिणये जननि प्रवृत्ते
वक्तव्य माज्य भुजिसाक्षिणि भर्तुरग्रे
आजीवनांत मिहते स्मि सदा नुकूला
साध्वीव्रतं परिचरंत्यन्नतं न चैतत् ॥ १६ ॥

ननु तत्रापि स्वातंत्र्यं किं नास्तीत्यतआह पत्येति हे जननि पत्या सह विवाहे प्रवृते सति आज्यभुजि अग्नौ च साक्षिणि सति भर्तुरग्रे इदं वक्तव्यं भवति इदं किं हे भर्तः जीवनपर्यंतं इह पतिव्रता व्रतं परिचरन्ती सती अहं

तव सदैवानुकूलास्मि एतदनृतं न सत्यमेव वच्मीतयर्थः अतः पारतंत्र्यं प्राप्त मन्यथा प्रतिज्ञा भगा नरकप्राप्ति रपयशश्चेति भावः ॥ १६ ॥

याते विदेश मथ काल वशं च पत्यौ
संदह्यते ऽनवरतं विरहाग्नि नात्मा
श्वश्रूजनस्य च वचो न कदा प्युपेक्ष्यं
नाहं वृणे पति मतो दृढनिश्चयो मे ॥१७॥

न केवलमिदमेव तत्र दुःखं किं त्वन्यदपीतयाह यातइति हे मातः पत्यौ विदेशं याते सति अथवा कालवशं याते सति निरन्तरं विरहरूपेणा-ग्निना आत्मा शरीरं साध्वोभिः संदह्यते यद्वा विदेशं याते विरहेण आत्मामनः संदह्यते मृते चाग्निना आत्मा शरीरं संदह्यते इतयनुक्रमोपि योज्यः अथ च श्वश्रूजनस्यापि वचः कदापि साध्वीभि र्न उपेक्ष्यं युक्तयुक्तं वांगीकार्यमेवे-तयर्थः इदमपि दुःखं अत एतानि दुःखानि पश्यन्ती अहं पतिं न वृणे अयं मे दृढनिश्चयोस्ति ॥ १७ ॥

दुःखं श्रये बहु न चाल्प सुखस्य हेतोः
को वा पिबेन्मधुमुखं गरलाक्त कुंभं
कौमार मेव परम व्रतमाश्रयंती
नेष्यामि वासरगणं सुखतः स्वतंत्रा ॥ १८ ॥

ननु सुखहेतो र्दुःखमपि श्रेयतइतयतआह दुःखमिति हे मातः अल्पसुखस्य ग्राम्यधर्मरूपस्य हेतो र्बहुदुखं पूर्वोक्तं अहं न श्रये दृष्टान्तमाह को हि बुधः किंचि न्मधुमुखे यस्य तादृशं विषपूर्णं कुंभं पिबेत् न कोपीतयर्थः तर्हि किं-करिष्यसीतयतआह तस्मात् कौमारमेव परमं व्रतमाश्रयन्ती स्वतन्त्रा सती सुखतो जीवतांतं दिनसमूहं नेष्यामि ॥ १८ ॥

अस्या विनिश्चय ममुं भिदुरेतरं सा
मत्वा जगाद गुणाव त्यखिलं नृपाय

कार्यं यथा भिलषतीति नृपो गदित्वा
तूष्णीं बभूव विमनस्क इवै तदग्रे ॥ १९ ॥

अस्याइति अथ गुणवती अस्याः मन्दोदर्य्या अमुं पतग्रहणरूपं वि.
निश्चयं भिदुरेतरं प्रतिवाक्यैर्भेत्तु मशक्यं मत्वा अखिलमपि वृत्तं नृपाय
जगाद स नृपोपि सा पुत्री यथाभिलषति वांछति तदेव कार्यमिति गदित्वा
विमनस्क इव एतस्या राज्ञा अग्रे तूष्णीं बभूव ॥ १९ ॥

तस्या रहस्यथ जगाद नृपो वयस्याः
यूयं हि मद्दुहितरं परिवोधयध्वम्
सा वोधनापि वहुधा सुवचोभि राभि
स्त्वद्वन्मना गपि मनो न दधौ विवाहे ॥ २० ॥

तस्याइति अथ नृपः एकान्ते तस्याः पुत्र्याः वयस्याः सखोः प्रति
जगाद हे सख्यः मत्पुत्रीं यूयमेव विवाहार्थं परिवोधयध्वं अथेत्य माभिस्मा
भिराभिः सखोभिः कृत्वा सा वहुधा वोधितापि त्वद्वत् यथा त्वमसि तथा
मनागपि विवाहे मनो न दधौ ॥ २० ॥

सार्धं सखीभि रथ सो पवने कदाचित्
स्वैरं विहर्तु मगम द्विकचद्रुमालौ ।
पद्मेषु तत्र विचरं त्यथ सा विरेजे
पद्मेव गुंजदलिपुंजसमाकुलेषु ॥ २१ ॥

सार्धमिति अथ सा कदाचित् सखोभिः सह विकचा द्रुमाणामालयः
पंक्तयो यस्मिन् तस्मिन् वने स्वैरं विहर्तुं क्रीडां कर्तुं अगमत् अथ तत्रोपवने
गुञ्जद्भिरलिपुंजैःसमाकुलेषु पद्मे षु अंवुजेषु विचरंती सा पद्मालक्ष्मीरिव विरेजे
लक्ष्म्या हि कमलेषु निवासः प्रसिद्धः ॥ २१ ॥

सम्राज मंवुजतता ववगत्य भृंगा
स्तस्या मुखाब्ज मपतन्नलिनानि हित्वा ।

सा व्याकुलीभवदधीरदृगन्यतो गात्

सख्यावृता थ कुसुमानि विचेतु मारात् ॥ २२ ॥

सम्राजमिति तत्रांबुज ततो अस्या मन्दोदर्या मुखरूप मज सम्राजं चक्रवर्तिनं मत्वा तत्रत्याभृङ्गाः इतरकमलानि त्यक्त्वा तत्रैवापतन् अन्योपीतर पुरुषान् त्यक्त्वा सम्राजमेवाश्रयति अत्राधिकताद्रूप्य रूपकालङ्कारः अथ सापि तानभिपततो वीक्ष्य व्याकुली भवंत्यो अधीरे चंचले च दृशौ यस्या स्तादृशी सखीभि रावृता सती आरात्समीप एव अन्यतो ऽन्यस्यां पुष्पवाटिकायां पुष्पानि विचेतु मगात् ॥ २२ ॥

काचि ज्जगौ कलरवा कृत लास्य मन्या

पुष्पाणि हर्तु मगम न्नृप कन्ययान्या ।

द्वारे पुमांस मपरा विनिवर्तयंती

तस्थौ सखी श्रितलता त्वपरा हसंती ॥ २३ ॥

अथान्यासां सखीनामपि तत्र चेष्टामाह काचिदिति तत्र काचि त्सखी कलो मधुरा स्फुटो रवो यस्या स्तादृशी सती जगौ गीतं चकार अन्या च लास्यं नृत्य मकृत अथान्या नृपकन्यया सह पुष्पाणि हर्तु मगमत् अपरा तूपवनस्य द्वारे अपरं पुमांसं विनिवर्तयंती सती तस्थौ ध्वनौ तु मधुरा स्फुटे कल इत्यमरः ॥ २३ ॥

व्याकोश मंघ्रिहननै रकरो दशोक

मालिंगनैः कुरुवकं तिलकं विलोक्य ।

सा मालती प्रभृतिषु स्वय मालवालं

मस्य त्वाधत्त कृपयाथ कृपीटपूर्णम् ॥ २४ ॥

केवलं तस्या श्चेष्टा माह व्याकोशमिति सा मंदोदरी अंघ्रिहननैः पादाहतिभिः अशोकवृक्षं व्याकोशं प्रफुल्लं अकरोत् तथा आलिंगनैः कुरुवकं प्रफुल्ल मकरोत् अथ तिलकं तु विलोक्यैव प्रफुल्लमकरोत् अथ सा मालती प्रभृतिषु यूथका मल्लिकादिषु स्वयमेव कृपया आलवालं सम्यग् व्यधत्त अकृत

अथ तमालवालं कपयैव कपोटेन जलेन पूर्णमपि अक्कत तदुक्तम् पादाहतः प्रमदयाविकसत्यशोक स्त्वव्ज्रहातिमुकुलो मुखसीधुसक्तः आलिंगितः कुरुवकः कुरुते विकाशमालोकित स्तिलक उत्कलितो विभातोति कपोटमुदरे जले इतिरत्नकोशः ॥ २४ ॥

काचिल्लतां कुसुमितां सरसाधिरूढां
वीच्या ब्रवीत् स्मितमुखी स्मृतभूपगी स्तां
हे राजपुत्रि वरवर्णिनि पश्य चित्रं
पत्या विनेय मिह तिष्ठति नो जडापि ॥ २५ ॥

काचिदिति काचित्सखी सरलवृक्षाधिरूढां कुसुमितां लतां वीच्य स्मृता भूपस्य चन्द्रसेनस्य गोः त्वया मत्पुत्री विबोध्येत्युपदेशो यया अत एव स्मितमुखी सती तां मंदोदरीं अब्रवीत् हे वरवर्णिनि राजपुत्रि इति चित्रं पश्य इति किं इह इयं जडापि लता पत्या सरलरूपेण स्वामिना विना न तिष्ठति अत स्त्वं विदुष्यपि सती कथं पतिं विना तिष्ठसीति भावः ॥ २५ ॥

इत्थं विहारनिरतास्वथ तासु कश्चित्
भूपो खिलांगसुभग स्तुरगैकरातिः
दूरात् द्रुमानुपवनस्य समीच्य मत्वा
विश्रामभूमिरिति तत्रसमाजगाम ॥ २६ ॥

इत्थमिति असुना प्रकारेण क्रीडा निरतासु तासु सतीषु अथ कश्चद्भूपः दूरात् तस्यो पवनस्य द्रुमान्वीच्य इयं विश्रामभूमिरिति मत्वा तत्र समाजगाम को० भूपः अखिलै रंगैः सुभगः तथा तुरग एव एकोगतिः सुहृत् यस्य एकाकीतयर्थः राति ददाति सुख मिति रातिः कर्तरितिच ॥ २६ ॥

आराममिभित्ति मधिगत्य स शाखिशोभां
द्रष्टुं प्रसारितशिरोधि रुपात्तवल्गुः ।
बालां समीच्य कुसुमेषु स काकताली-
यन्यायतः कृतममंस्त महत् स्वपुण्यम् ॥ २७ ॥

आरामेति स भूपः तस्यारामस्य भित्तिं कुडंय प्राप्य शाखिनां शोभां द्रष्टुं कुड्योपरिप्रसारिता शिरोधिर्ग्रीवा येन तथा उपात्ता गृहीता वल्गु रश्मिर्येन तादृशः सन् तत्र कुसुमेषु तां बालां मंदोदरीं वोच्य काकतालीयन्यायेन महत् स्वपुण्यं कृतं अमंस्त अत्र काका गमन मिव तालपतन मिव काकतालमितीवार्थे समासाच्च तद्विषयादिति ज्ञापका त्समासः उभयत्रोपमेयं तथा च तस्य तत्रागमनं तत्रैव च तस्या अवस्थानं तेन तस्याश्च समागमः काकतालसमागमसदृश इतिफलति ततश्च काकतालमिव काकतालीय मिति द्वितीयस्मिन्निवार्थे समासाच्च तद्विषयादिति सूत्रेणैवे प्रतिकृता वित्यधिकारस्थेन छप्रत्ययः तथा च पतितं तालफलं यथा काकेनोपभुक्तं तथा अनायासप्राप्ततद्दर्शनानंद स्तेनानुभूत इत्यर्थः ॥ २७ ॥

किं देवते यमखिलोपवनस्य साक्षात्
किं वा पुलोमदुहिता किमु कामपत्नी ।
इत्थं वितर्क्य बहुधा स्वगतं समीक्ष्य
द्वाःस्था मपृच्छ दथ वेत्रवती मुपेत्य ॥ २८ ॥

तां वोच्य तर्कयति किमिति इयं किं अखिलस्योपवनस्य साक्षा देवतास्ति किं वा पुलोम्नो दुहिता इन्द्राण्यस्ति किमु कामस्य पत्नीरति रस्ति इत्थं तां बहुधा स्वगतं स्वमनः स्थितमेव वितर्क्य स भूपः अथ द्वारिस्थितां वेत्रवतीं सखीं दृष्ट्वा तत्समीपं प्राप्य प्रकटं अपृच्छत् ॥ २८ ॥

केयं शुभे वरतनू रतनुप्रियाभा
निस्सीम कस्य सुकृतं य इमा मसूत ।
येस्याः सुनाम्नि निचिताः श्रुतिशर्मदाः के
वर्णाः सुवर्णलिपसाधनलेपनीयाः ॥ २९ ॥

कि मपृच्छदित्यतआह केयमिति हे शुभे इयं वरतनूः कास्ति कीदृश अतनोः कामस्य प्रिया रति स्तद्वदाभा यस्याः अथ कस्य सुकृतं पुण्य निस्सीम अपार मस्ति य इमा मसूत जनयामास कस्येयं पुत्रीत्यर्थः अथ च ये वर्णाः अस्या सुनाम्निखचिताः सन्तः श्रुतयोः शर्मदा भवन्ति तेर्णाः

के सन्ति को० वर्णाः स्वर्णस्य यत् लिपिसाधनं लेखनीप्रभृतिकं तेन लेखनी-याः अस्याः किं नाम इत्यर्थः । २९ ।

सैरंध्य् पि प्रतिवचो भिदधे थ राजे
स्ताव ह्नवा न्गदतु मे कुलनामनीखे ।
तामुक्तवानिति निशम्य पति र्जगत्या
देशः शुभो स्ति कुशले भुवि कोशलाख्यः ॥ ३० ॥

सैरंध्रीति सा सैरंध्र्यपि प्रतिवचः उत्तरं अभिदधे हे राजन् तावत् भवानेव स्वकुलनामनी मे मह्यं गदतु स राजापि इति श्रुत्वा तां सखीं ऊचिवान् हे कुशले अस्यां भुवि कोशलाख्यः कश्चित् शुभो देशोस्ति सैरंध्री परवेश्मस्था स्ववशा शिल्पकारिकेत्यमरः ॥ ३० ॥

तस्या धिपोस्म्यभिधया खलु वीरसेनः
काकुत्स्थवंशजनितो जनगीतकीर्तिः
मां प्राप्त मत्र मृगयावशतो ह्यवेहि
पश्चात् स्थिता स्ति पृतना चतुरंगिणी मे ॥ ३१ ॥

तस्येति तस्य देशस्य अधिपः अहमस्मि नाम्ना तु वीरसेनो स्मि कीदृशः काकुत्स्थवंशे जनितः तथा जनेषु गीता कीर्तिर्यस्य अत्र तु मां प्राप्तं मृगया वशतो जानीहि ननु भूमिपः सन् एकाकी कथ मसीत्यत आह मम चतुरंगिणीसेना पश्चात् स्थितास्ति ॥ ३१ ॥

एतां ब्रवीतु भवती वचसा ममैतद्
गांधर्वतो थ विधितो महिषी मम स्यात्
ने दृक्स्वरूपगुणशीलयुते च्छिताय
न्नैवाधुनावधि तदस्मि गृहीतदारः ॥ ३२ ॥

अथास्याः किमर्थं नामादिकं पृच्छसीत्याह एतामिति हे सैरंध्रि तस्मात् भवती त्वं मम वचसा एतामेतद्वचो ब्रवीतु किमित्याह गंधर्वाख्येन गांधर्वः समयान्मिथ इति स्मृत्युक्तलक्षणेन विवाहेन वेदविहितेन वा मम

पट्टराज्ञी स्यात् ननु पूर्वमनूढोसौ त्वतआह यस्माद्यादृश: अस्या: संति तादृशै: स्वरूपगुणशीलै र्युताकाप्यन्या पूर्वं मया नेक्षिता न दृष्टासीत् तस्मात् अद्या-वध्यपि अहं गृहीतदारो नास्मि इयमेव मनोनुरूपा मया दृष्टा अतोतयैव नूतनविवाहं कर्तु मिच्छामीति भाव: ॥ ३२ ॥

श्रुत्वेति सापि सहसा सहसांचितास्या
गत्वा ब्रवीच्छ्रितनया तनयां नृपेंद्रो:
त्वद्भाग्यत: स्मरसमो रसमोहितो सौ
प्राप्त: स्वयं वितरणे तरणे स्तनूज: ॥ ३३ ॥

श्रुत्वेति सा सैरंध्र्यपि इति श्रुत्वा हसेन हास्येन सहितं अत एवी चितमास्यं यस्या ईदृशी सती सहसा शीघ्रं गत्वा नृपेन्द्रो स्तनयां मंदोदरीं अब्रवीत् कीदृशी श्रितो नयो नीति र्ययानीतियुक्तं वचो ब्रवीत् इत्यर्थ: हे नृपकन्ये तुद्भाग्यत एव असौ भूप: स्वयमागत: कीदृश: स्मरेण समस्तुल्य रूप: किंवांच्छतीत्यतआह रसेन तव श्रृङ्गारेण मोहित: त्वां धर्मपत्नीं कर्तु मिच्छतीत्यर्थ: तथा वितरणे दाने तरणे: सूर्यस्य तनूज: पुत्र: कर्ण इवा-स्ति यद्वा वितरणे तत्पर इत्यध्याहार्यं तथा तरेणे: सूर्यस्य तनूज: सूर्यवंशीय इत्यर्थ: यद्वा वितनोकारच्युतकं तथा वत खेदे रणे युद्धे तरणे स्तनूजो यम इवेत्यर्थ: यद्वा वितरणे इतिसंबोधनं विगता तरिणीं: संसारसागरे नौकावदा श्रयरूप: पति र्यस्यास्तत्संबुद्धौ हे वितरणे निराश्रये राजपुत्रि अयं तरणे स्तनूज: सूर्य्यवंशीय इत्यर्थ: ॥ ३३ ॥

रूपेण भाति हिमगु र्गुरु रेष मत्या
शौर्येण शक्र इव नीरधि वद्गभीर:
ऊढामुना सुमुखि भासि न चान्यथा त्वं
रत्नं विभाति न विना क्व च कांचनेन ॥ ३४ ॥

रूपेणेति एष भूप: रूपेण चंद्रो भाति बुध्या च बृहस्पति र्भाति शौर्येण शक्र इव भाति नीरधिवद्गंभीरो भाति हे सुमुखो अमुना राज्ञा ऊढा विवा

इतैव त्वं भासि अन्यथा न नन्वीदृक् सौंदर्यवत्यैवं न विभामीत्यत आह यतः कांचनेन विना क्वचिदपि सुंदरमपि रत्नं न विभाति तथा त्वमपीत्यर्थः ॥ ३४

तातोपि ते सुदति चेतसि खेदयुक्तो
नित्यं समादिशति नो रहसि त्वदर्थं ।
अंगीकरोषि यदिदं सुखिनः स्म एते
तातस्तवैष नृपति स्तु मयो वयं च ॥ ३५ ॥

ननु मम विवाहे न वांच्छास्तीत्यत आह तातइति हे सुदति तव तातोपि त्वदर्थं नितरां चेतसि खेदयुक्तोस्ति अतो निच्छंत्यपि त्वया पितृखेदहरणाया वैखमेवैतत्कार्यमित्यर्थः ननु त्वया कथं सखेदयुक्तो निर्णीत इत्यत आह यतो नितरामेव एकांते त्वदर्थं अस्मान् सखीः समादिशति मत्पुत्री परिबोध्यतामाज्ञापयति एवं सति न केवलं तव पितैव सुखी भविष्यति किं त्वन्यपीत्याह यदि इदं मद्वचः अंगीकरोषि एते वयं सुखिनः स्मः के इत्याह तव पिता एष नृपति स्तथा त्वमपि अथ वयं सख्यश्च उपलक्षणमेवैतत् मातृभ्रातादयोपीत्यर्थः अत्रास्मदुत्तरत्वा त्तदाश्रितत्वादस्ते उत्तमपुरुषः ॥ ३५ ॥

उक्तेति सा प्रतिवचो भिदधे मृगाक्षी
किं वक्षि हे सखि वृणे न पतिं कदा पि ।
कौमार मेव नितरां व्रत माश्रये हं
कामो न धर्षितु मलं हृदयं मदीयं ॥ ३८ ॥

उक्तेति सा मृगाक्षी मंदोदरी इति तयोक्ता प्रतिवचोऽभिदधे हे सखि त्वं किं वक्षि गदसि अहं तु पतिं कदापि न वृणे तर्हि किं करिष्यसीत्यत आह कौमारमेव व्रतं नितरा महमाश्रये तर्हि कामपीडां कथं सहसे इत्यत आह मदीयं हृदयं कामो धर्षितु मलं समर्थो नास्ति विरक्तत्वादित्यर्थः ॥ ३६ ॥

भूयो पि साथ नृपजां जगदे वयस्या
मुग्धे मुधैव करगां नु सुधां जहासि ।

नातः पुरा जगति को पि जिगाय कामं
पश्चात् स्मरिष्यसि हि मद्वचसः स्मरार्ता ॥ ३७ ॥

भूयइति स सखी भूयोपि तां नृपजां जगदे हे मुग्धे वृथैव करे प्राप्तां सुधां त्यजसि अथ कामो मया जित इति तद्वचो ऽपाकरोति हे नृपजे अतो पूर्वं इह जगति कोपि कामं न जिगाय न जितवान् यद्वा कोपि ब्रह्मापि नः जितवान् तस्य स्वपुत्र्या मप्यभिगमनात् अथास्मद्वचसःकालांतरे कामार्तासति पश्चात् स्मरिष्यसि तदुक्तं प्रबोधचंद्रोदये अहिल्याया जारः सुरपतिरभूदात्म तनयां प्रजानाथोयासी दभजत गुरो रिंदु स्वलां इतिप्रायः को नानपद मपथे कार्यंतमयाश्मो मद्बाणानां क इव भुवनो न्माथ विधि ष्विति ॥ ३७ ॥

रोषा दथो पुन रुवाच सखीं स्थितां सा
पित्रोर्गिर स्तव किमस्ति वचो तिरिक्तं
एनं निवारय तदेत्य नृपंयथेष्टं
देशं प्रयातु खलु नेषु तिलेषु तैलम् ॥ ३८ ॥

रोषादिति अथ सा मंदोदरी तां पुरःस्थितां सखीं पुनः रोषादुवाच हे सखि तवेदंवचः किं पित्रोः मातापित्रोः गिरः सकाशात् अतिरिक्त मधिक मस्ति तयोर्वच उल्लंघ्य तव कथमंगीकुर्या मित्यर्थः तस्मादेनं नृपं निवारय यथेष्टं देशं प्रयातु कथं निवारयामीत्यत आह इति तं कथय हे नृप खलु निश्चयेन् एषु तिलेषु तैलं नास्ति अस्यां कामो नास्तीतिभावः लोकोक्ति रलंकारः ॥३८॥

सा न्यक्कृतेति त मुपेत्य नृपं बभाषे
नेयं भवंत मिह वांच्छति राजपुत्रि ।
निर्गंधि रित्यथ स तां कलिका मिवालि
मत्वा निराशमनसा भिययौ निजाशां ॥३९ ॥

सेति इत्थं तयान्यक्कृता तिरस्कृता सा सखी त नृपं प्राप्य बभाषे हे नृप इयं राज पुत्री भवंत मिह न वांच्छति अथ सोपि नृपः निर्गतः कामस्य गंधो

लेशो यस्या ईदृशोय मिति तां मत्वा निराशमनसा निजाशां स्वदिशं प्रतिययौ कां क इव निर्गंधि रिय मिति कलिकां मत्वा भ्रमर इव अत्र निराशस्यापि स्वाशां प्रतिगमनात् विरोधाभासा लंकार: गंधो गंधक आमोदे संबंधे लेशगर्वयो रिति हैम: ॥ ३९ ॥

तस्या भगिन्यवरजेंदुमतीति नाम्ना
योग्या वरस्य महिषीवदनेन राज्ञा ।
त्वं कीदृशं वर मभीप्ससि चेति पृष्टा
साथ स्वयंवर मिदं शनकै रवोचत् ॥ ४० ॥

तस्याइति अथ तस्या मन्दोदर्या: अवरजा कनिष्टा भगिनी इन्दुमतीति नाम्ना आसीत् सा तु वरस्य योग्या यौवनोपेता यदा जाता तदा राज्ञा चन्द्रसेनेन त्वं कीदृशं वरं कांक्षसे इति स्वराज्ञी मुखेन पृष्टा अथ सा इन्दुमतीमातु र्वच: श्रुत्वा स्वयं वरं इदमेव लज्जया शनैकै रवोचत् ननु स्वयंवर मित्यस्याग्रे वांच्छामीत्याद्यपि तयोक्तं सलज्जत्वादतस्तदध्याहार्यमिति चमत्कारातिशय: ॥ ४० ॥

आकर्ण्य भूपति रपीति वचोति हृष्ट:
सर्वा न्नृपान्प्रति चरान् निजपत्रहस्तान् ।
पुत्रीस्वयंवर विधे: परिपूर्तिहेतो
रानेतु मीप्सितसमस्तदिशो दिदेश ॥ ४१ ॥

आकर्ण्येति अथ भूपति रपि राज्ञी मुखात् इति वच: श्रुत्वा अतिहृष्ट: सन् स्वपुत्र्या: स्वयंवरविधे: परिपूर्णतार्थं सर्वान्नृपान् प्रति निजानि पत्राणि हस्तेषु येषां तान् चरान् गूढपुरुषान् तान् नृपाना नेतुं दिदेश आज्ञसवान् कीदृशान् ईप्सिता दृष्टा: समस्ता दिशो यै: ॥ ४१ ॥

पश्चात्तदीयशिविरोत्तरणाय भूमी:
संस्कृत्य तत्समुचिताखिलवस्तुपूर्णा: ।

आस्तीर्य पुष्पचय मध्वसु चारुगंधिं
स्वर्गस्वसार मसृज न्निजराजधानीं ॥ ४२ ॥

पश्चादिति तान् त्वरयित्वा सनृपः पश्चात् तेषां राज्ञां शिविरस्य निवेशस्य उत्तरणाय स्थित्यर्थं तेषां राज्ञां योग्यैः सर्ववस्तुभिः पूर्णाः भूमोः संस्कृत्य संशोध्य मार्गेषु सुगन्धिं पुष्पचयं आस्तीर्य निजराजधानीं स्वर्गसमानां स्वर्गतुल्या मसृजत् व्यरचयत् स्वसारोहि प्राय स्तुल्यरूपा भवन्ति भगनी स्वसेत्यमरः॥४२॥

तत्रा ययु र्युधिवुधाः विविधा युवानो राजान उज्वलधियो ज्वलदुग्रतापाः। सेनावृता मुकुटकुंडलमंडितांगाः शूराः शचीपतिपुरी मिव लोकपालाः ॥ ४३ ॥

तत्रेति तत्र नगरे विविधा युवानो राजानः आययुः कीदृशाः युधिवुधाः कुशलाः तथा उज्वलाधियो येषां तथा ज्वलन् उत्कृष्टः प्रतापो येषां तथा सेनाभि र्वृताः तथा मुकुटकुंडलादिभि र्मंडितांगाः तथा शूराः भटाः कां क इव शचीपति पुरी ममरावतीं लोकपाला इव ॥ ४३ ॥



केचिन्नृपा नृपतिनाथ विलिख्यहूताः श्रुत्वैव केचन परे तु दिदृक्षयैव। अन्ये स्वयंवर विधौ खलु मंडलेशाः शुश्रूषि तुं नृप मयुर्मयुनाथकल्पम् ॥ ४४ ॥

केचिदिति तत्र केचित् नृपाः नृपतिना चन्द्रसेनेन स्वयं विलिख्य हूता आकारिताः सन्तः अयुराजग्मुः केचिच्च स्वयंवरं श्रुत्वैवाजग्मु परेतु तत्कौतुकस्य द्रष्टु मिच्छयैव अन्येतु मंडलेशाः राज्ञा स्वमंडलेष्वधिकृताः भूपाः तत्र स्वयंवरविधौ नृपं चन्द्रसेनं शुश्रूषितु माजग्मुः की० नृपं मयूनां नाथः कुबेरस्तत्तुल्यं अयुरिति या प्रापण इत्यस्य लिङि रूपं ॥ ४४ ॥

आतिथ्य मिष्ट मुकल्प्य नृपोथ तेषा मुत्तार्य चारु भवनेषु निवेश मेषां। नो याचय मस्तु किं मभीहतु कस्य वस्तु स्वानित्युवाच सचिवां स्तदुपासनेषु ॥ ४५ ॥

आतिथ्यमिति अथ नृपश्चन्द्रसेन स्तेषां राज्ञां इष्टं योग्य मातिथ्य सुपकल्प्य रचयित्वा एषां च चारुषु भवनेषु निवेश्य मुत्तार्य अथ तेषां उपासनेषु परिचर्यासु स्वान्सचिवान् इत्यूवाच इति किं हे सचिवाः अत्र कस्यापि राज्ञो भृत्यस्य वा किमपि स्वापेच्छं वस्तु शय्यासनादि याच्यं तास्तु यद्यत् याच्यं तत्तदग्र एव तत्र देयमित्यर्थः क्रमादातिथ्यातिथेयावतिथ्यर्थेत्र साधुनी त्यमरः ॥ ४५ ॥

अन्येद्यु रुद्यदुशनस्य भितो नवद्ये
सिंहासनेषु विनिवेश्य स भूपसिंहान् ।
पुष्पस्रजं भ्रमरिणीं दधतीं स्वपुत्रीं
तत्रानिनाय लतिका मिव शाखिमध्ये ॥ ४६ ॥

अन्येद्युरिति उद्युत् उशनाः शुक्रो यत्र एवं सर्वतोन्यग्रहचर्चादिभि रप्यनवद्ये निर्दोषे अन्यस्मिन् दिने स चन्द्रसेनःभूपतिसिंहान्सिंहासनेषु विनिवेश्य भ्रमरयुक्तो पुष्पमालां करे दधतीं स्वपुत्री मिन्दुमतीं तत्र आनिनाय कस्मिन् कामिव शाखिनां मध्ये भ्रमरयुतपुष्पमालां दधतीं लतिका मिव अन्येद्युरिति परुत्परा रीत्यादिना निपातनादव्ययम् ॥ ४६ ॥

मूर्तेव तां प्रति मति र्जरती तु काचि द्राज्ञां क्रमा द्विषयनाम गुणान्ववायान् । संकीर्तयन्त्यथ वलंब्य सुवर्णयष्टिं वभ्राम तत्र शनकै र्विदिताखिलार्था ॥ ४७ ॥

मूर्तेति अथ तया सह तत्र काचित् अतिवृद्धा सुवर्णयष्टि मवलंब्य शनकै र्वभ्राम कोदृशी मूर्ति धारिणीमति रिव अतिबुद्धिमतीत्यर्थः तथा ता मिन्दुमतीं प्रति तत्र स्थितानां राज्ञां क्रमात् विषयो देशः नाम च गुणश्च अन्ववायो वंशश्चैतान् संकीर्तयन्ती अय मेतद्देशीया राजा इद मस्य नाम एतत् गुणोपेता एतद्वंशीयश्चे ति तां प्रति कथयन्तीत्यर्थः कुतः सर्वेषां देशादिकसूचतवतीत्यत आह विदिता अखिला अर्था भावा यस्याः अति वृद्धत्वा त्सर्वज्ञे त्यर्थः ॥ ४७ ॥

**सा श्री रिवेश भवने विजहौ तु यं यं निःश्रीकतां स स बभार ह्रदा तिदूनः । यं यं तु पार्वणसुधांशुमुखी प्रपेदे तेषां बभु विकसितानि मुखांबुजानि ॥ ४८ ॥**

सेति सा इन्दुमती श्रीरिव य यं भूपं नामादिकं श्रुत्वा तत्याज सः भूप हृदयेनातिदुःखितः सन् निःश्रीकतां बभार ॥ श्रिया त्यक्तो हि जनोगत श्री र्भवति अथ क्रमा त्सा पूर्णचन्द्रानना यं यं तु प्रपेदे प्राप्तवती तेषां मुखरूपान्यम्बुजानि प्रफुल्लानि सन्ति बभुः इयमस्मानेव प्राप्स्यतीति मोदेनेत्यर्थः ॥४८॥

**कश्चि न्नृपो वरगुणः सुमनः प्रकाशः श्रीमा न्महोज्वल उरुद्रविणानुगालिः । तत्रै नया तदनुरूपिकया थ वव्रे मंजुस्रजा सदसि पश्यति राजवृन्दे ॥ ४९ ॥**

कश्चिदिति अथ तयेन्दुमत्या तेषां मध्ये कश्चिन्नृपः तदनुरूपिकया तद्योग्यया मंजुस्रजा कृत्वा वव्रे वृतः क्व सति सभायां राजसमूहे पश्यति सति कीदृ॰ नृपः श्रेष्ठा गुणा यस्य यद्वा वराणां जामातॄणां यावन्तो गुणा मृग्यन्ते तावन्तस्सन्त्यस्मिन् तथा सुमनसो देवा स्तद्वत्प्रकाशो यस्य यद्वा सुष्टु शोभनः मनसः प्रकाशो यस्य उदारमना इत्यर्थः तथा श्रीमान् शोभावान् लक्ष्मीवान्वा तथा महान् उज्वलो दीप्तः महानुज्वलः शृङ्गारोस्येति वा महेन उत्सवेनोज्वल इति वा महसा तेजसा ज्वलतीति वा तथा उरु बहुलं द्रविणं धनं विद्यते यस्या ईदृशी अनुरागानां किंकराणामालिः पंक्ति र्यस्य किंकरा अपि धनाढ्याः सन्तीत्यर्थः यद्वा उरु द्रविणं बलं यस्य ईदृशी अनुगालिर्यस्य यद्वाअनुरूपिकया तस्य भूपस्य तुल्यगुणविशिष्टया स्रजेति कृत्वा तस्या मध्ये तानि विशेषणानि प्रयोक्तव्यानि तथा हि वरो गुणः सूत्रं यस्यां तथा सुमनोभिःपुष्पैःप्रकाशो यस्याः तथा श्रीः शोभा तद्वती तथा महोज्वला महा विशदा तथा उरु बहुद्रविणः धनं मूल्य मिति यावत् यस्याः तथा अनुगाः पश्चाद्गामनो ऽलयो यस्याः यद्वा अनु पश्चाद्गायन्ति भ्रमरा यस्याः यद्वा उरुद्रविणाःमदेन बहुबलवन्तःअनुगाश्च अलयो यस्याः यद्वा तदनुरूपिकयेति इन्दुमती पक्षेपि योज्यम् । तत्रापि नृपवद्विशेषणानि योज्यानि द्रविणं कांचने धने पराक्रमे बलेपि स्यादिति हेमचन्द्रः ॥ ४९ ॥

तां चापभां स्रज मथो नृपतिः स बिभ्र न्मौर्वीभवद्भ्रमरसंह-
ति मात्तकण्ठाम् । कस्य भ्रमं न सुमनो धनुषो वितेने सा
सूय मीक्षितवत स्तु विना क्षितीशान् ॥ ५० ॥

तामिति अथ तां स्रजं बिभ्रत् स भूपः सेर्ष्यं दृष्टवतो ऽन्यभूपा न्विना कस्य जनस्य अयं काम इति भ्रमं न वितेने सर्वोपि तं काम मेव जानाति स्मेत्य-र्थः कुत इत्यत आह को०स्रजं चापभां धनु स्सदृशीं तथा मौर्वो भवती भ्रमर-संहति र्यस्यां तथा आत्तो गृहीतः कण्ठो यया कामस्य हि पुष्पमयं धनुः भ्र-मरमयी मौर्वी चास्ति ॥ ५० ॥

सार्धं सखीभि रथ सापि गवाक्षमध्ये मंदोदरी निखिलराजक मीक्षमाणा । मद्राधिपं क मपि भूप मुदीक्ष्य दैवा त्पंचेषुलून-हृदया समभूत्तदानीं ॥ ५१ ॥

सार्धमिति अथ सा मंदोदर्यपि स स्त्रीभिः सह गवाक्षस्य वातायनस्य मध्ये निखिलमपि राजकं राजसमूहं ईक्षमाणा तेषां मध्ये कमपि मद्रदेशा-धिपं भूप मुदीक्ष्य दैवा दुर्भाग्यात् तदानीं पंचेषुना कामेन लूनं छिन्नं हृदयं यस्या ईदृशो अभूत् या विरक्तासो त्सैव कामवशी यातेत्यर्थः अथ राजकं राज न्यकं च नृपतिक्षत्रियाणां गणे क्रमादि त्यमरः ॥ ५१ ॥

ऊचे प्रसूं कुरु ममाप्य धुना विवाहं मद्राधिपेन नृपतिं परि-बोधयित्वा । श्रुत्वे ति साति मुदिता स्वपतिं बभाषे राज न्सुता परिणिनीषति ते परापि ॥ ५२ ॥

ऊचेइति अथ सा मंदोदरी स्वमातर मूचे हे मातः नृपति चंद्रसेनं बो धयित्वा अमुना मद्राधिपेन भूपेन सह अधुना ममापि विवाहं कुरु सा गुण वत्यपि इति पुत्र्या वचः श्रुत्वा अति मुदिता सती स्वपतिं बभाषे हे राजन्नो अपरापि तव सुता मंदोदरी अधुना परिणयं कर्तुं वांच्छति ॥ ५२ ॥

आकर्ण्य सोपि मुदितो मुमुदे नितांतं चक्रे परेद्यु रनयो

विधिना विवाहं। ताभ्यां मदादथ तदा बहुपारिवर्हं माणि-
क्यहेमवसनेभ तुरंगमादि॥ ५३॥

आकर्ण्येति स राजापि इति श्रुत्वा पूर्वमिन्दुमतो स्वयंवरे मुदितोपि
पुन र्नितांतं निरंतरं मुमुदे अथ परेद्यु: परदिने अनयो रिंदुमतो मंदोदर्यो:
सुतयो र्विधिना सह विवाहं चक्रे अथ तदेव ताभ्यां मणिसुवर्णवस्त्रगजाश्वा
दिकं बहुलं पारिवर्हं दाजेति भाषया प्रसिद्धं ददौ॥ ५३॥

दासीजनं च बहुलं परिभूषितांगं शुश्रूषणाय सुतयोस्तु स
कूकुदो दात्। माता प्यजस्र मथ संस्रवदस्त्रुभि स्ते संस्नाप्यमूर्ध्नि
पुरुहार्दयुतालिलिंग॥ ५४॥

दासोति सत्कृत्यालंकृतां कन्या यो ददाति स कूकुद इत्येवं विध: स राजा
तयो: शुश्रूषणाय परिभूषितांगं बहुलं दासीजनं च अदात् अथ तयो र्मात
गुणवत्यपि अजस्रं स्रवद्भिरस्रुभिस्ते सुते मूर्ध्नि संस्नाप्य बहुप्रेमयुता सती
आलिलिंग॥ ५४॥

इत्थं विसृज्य जगतीपति रात्मजे ते अन्यानपि क्षितिभृतो
वसुभि: प्रतोष्य। दत्वा धनानि बहुलानि धरासुरेभ्य: स्वात्मा
ममाद्य कृतकृत्य इहेत्यमंस्त॥ ५५॥

इत्थमिति एवं स: चंद्रसेन: ते आत्मजे विसृज्य अथान्यानपि भूपान्
वसुभि धनै: प्रतोष्य धरासुरेभ्यो विप्रेभ्यश्च बहुलानि धनानि दत्वा अद्य मम
स्वात्मा इह कृतकृतार्थो जात इत्यमंस्त॥ ५५॥

मंदोदरी तु विधिना परिवञ्चिता सा यत्तं पतिं पतित माप
सुरूपलुब्धा। हित्वा स ता मपि सती मपरत्र रेमे कौभेर्ण-
सीव करट: सरसीं विहाय॥ ५६॥

इदानो प्रस्तुतं मंदोदरी वर्णन मेवाह मंदोदरीति सा मंदोदरी तु वि-
धिना दुर्दैवेन परिवंचिता जाता कुत इत्याह यस्मात् सुरूपेण लुब्धा सती तं
पापिनं मद्राधिपं प्राप तस्य पापित्व मेवाह सहितां मंदोदरीं सतीमपि त्यक्त्वा

अपरञ्च कलत्रे रेमे कां हित्वा कस्मिन् क इव सखीं हित्वा कौभे अर्णसि जले काक इव काकस्य हि प्रकृति यत् पूर्णामपि सरसीं तरक्षा भ्रष्टो करकाय कुंभजलं पिबति ॥ ५६ ॥

दृष्ट्वा कदापि गणिका मथ लालयंतं तं काप्युदीरितवती वत चांद्रसेनीम्। दूनेति सा हृदि निशम्य बहिः स्मितास्या भूपं बभाण रहसीति पते किमेतत् ॥ ५७ ॥

दृष्ट्वेति अथ तं भूपं काचित्सखी कदाचित् गणिकां लालयंत दृष्ट्वा चन्द्रसेनपुत्रीं मंदोदरीं ऊचिवती तव पति वैश्यां लालयतीत्युवाच सापीति श्रुत्वा हृदि दुःखिता जाता बहिश्च हठेन स्मितास्या सती त भूपं बभाण हे पते एतत्किं यत् ईदृशं निंद्यं कर्म करोषीतग्र्थः ॥ ५७ ॥

इत्थं तयाथ परिभाषित उक्तवांस्तां धूर्तेन केनचिदलीक मिहोदितासि। भूयो व्यदृश्यत तया स्वय मेष दास्या कुर्वन्नहो निधुवनं भुवने कदाचित् ॥

इत्थमिति एवं तया परिभाषितः स निंद सुपालब्धः स भूयस्ता मुक्तवान् ऊचितवान् हे मंदोदरि केनचित् धूर्तेन वंचकेन इह अलोकं मसत्यमेवोक्तासि अथ कदाचित् तया मंदोदर्या एष भूपो दास्या सह एकांते स्वभुवने एव निधुवनं मैथुनं कुर्वत् स्वयमेव व्यदर्शि दृष्टः व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रत मित्यमरः ॥ ५८ ॥

एवं पतिं पतित मेत्य पतिव्रता सा पश्यंत्वमूनि दुरितानि नितांत मस्य। इत्थं स्वकीय मनिशं परिगर्हयंती हृद्येव कश्मलमलीमस एतदूचे ॥ ५९ ॥

एवमिति सा पतिव्रता तं पतितं पतिं प्राप्य अथ चास्य बहूनि पापकर्माणि नितांतं पश्यंती सती अथ स्वकीयमेव इतर मनिशं निंदयंती कश्मलेन मलोमसे मलिने हृदि एव एतद्वक्ष्यमाण मूचे ॥ ५९ ॥

दद्यां नु दोष मिह कस्य यतोह मंधा वंधेत्र चारु दृगपि स्वय मत्र मग्ना। किं मेधियो भव दसा वुपलस्थिरापि ह्रादेयतंतु रिव हा त्रुटिता क्षणेन॥ ६० ॥

कि मूचेद्दतराह दद्यामिति इह कार्ये अहं कस्यान्यस्य दोषं दद्यां यतो यस्मादहं चारु दृक् सुलोचनापि अंधेव अत्र अन्धो दुःखरूपकूपे स्वयमेव मग्ना अहो मम वुद्धेः किं सभवत् यदियं पूर्वं पाषाणवत् स्थिरापि अधुना क्षणेनैव ह्रादेयस्य कमलस्य तंतु रिव त्रुटिता हा इति खेदे॥ ६० ॥

मन्ये भिमानकृति रस्त्यखिलापि चैषा ना ग्राहि येन गदितं वहुधापि पित्रोः। नो वाहिता द्दभिहिता वत गीःसखीनां प्राप्तं फलं हि तदवद्यज मेतदद्य॥ ६१ ॥

स्वयमेवात्र हेतुं निश्चिनोति मन्ये इति इय मखिलापि कृतिः अहं कामं जेष्यामीत्यभिमानकृतास्तीति मन्ये येनाभिमानेन वहुधापि मातापित्रो र्गदितं नैवाग्राहि तथाहिताद्युक्ता सखीनामपि गी र्नाग्राहि अद्य हि तदवद्यजं तद्दोषजन्यं फलं ममैतत्प्राप्तं॥ ६१ ॥



यास्यद्यचेत्पितृगृहंप्रतिचात्र दूना नूनं हसिष्यति जनो निखिलोपि तत्र। भुक्त्वा विषादि यदि वा मृति माश्रयेहं नास्त्युद्धृति र्नरकनीरनिधेः स्वहंतुः॥ ६२ ॥

यामीति अत्र दुःखिता सती अद्य चेत् पितृगृहं प्रतियामि तर्हि तत्र निखिलोपि जनो मां नूनं हसिष्यति अहो अनयामद्वचो नाग्राहि तत्फलमद्य प्राप्त मितिहास्यंकरिष्यति, यदि वा विषादिकं भुक्त्वा मृति माश्रये तर्हि स्व हंतु रात्मघातिनो जनस्य नरकार्णवा दुद्धृति र्नास्ति कदाचिदपि नरकान्न मुक्तो भवतीत्यर्थः॥ ६२ ॥

तस्मादिहैव वयसो दिवसानि नेष्ये ध्याय न्त्वनंत मज मच्युत मेव चित्ते। इत्थं विमृश्य विषयेषु विहाय हार्दं निर्वेद माप परमोत्खर माश्रिता सा॥ ६३ ॥

तस्मादिति तस्माद्धेतो रिहैव पति मन्दिरे एव वयसः आयुषो ऽवशिष्टानि दिनानि नेष्ये नन्वत्र पुन र्दुःख मिति चेत्तत्राह किं कुर्वंती अनन्त मज मच्युतमेव चित्ते ध्यायन्ती नतु दुःख बहुलानन्यकामानितत्रार्थः कथा मुपसंहरति हे देवि इत्य ममुना प्रकारेण विमृश्य सा मन्दोदरी विषयेषु हार्दं विहाय ईश्वरमेवाश्रिता सती परं निर्वेदं वैराग्यं प्राप ॥ ६३ ॥

**अत एव शुभे शुभंयु त वचनं चारु मुहु र्मयोच्यते। न तथा भवति विहाय मामनुतापं प्रभजेत सा यथा ॥ ६४ ॥**

दृष्टान्त मुक्त्वा दार्ष्टान्तिके योजयति अतइति हे शुभे देवि अतएव हेतोः इदं शुभान्वितं चारुवचनं मया तुभ्यं मुहु रुच्यते कुत इतत्रतआह यथा सा मन्दोदरी पूर्वं नृपं विहाय पश्चात्तापिनं प्राप्य पश्चातापं चक्रे तथा भवत्यपि मां त्रिलोकीशं विहाय पश्चात्तापं न प्रभजेत तद्धितायैव मया पुनः पुनरुच्यते नैव स्वार्थ मिति भावः ॥ ६४ ॥

**निर्बंधं तदमुं च मुंच ननु भो रंभोरु नांभोरुह प्रख्यां स्ते वयवां शरे रतिखरै र्नेतुं तु हतोत्सहे। चंचच्चन्द्रमरीचिशीतलतलेष्वारामहर्म्यादिषु प्रोद्यत्प्रेमपरीवृतौ कुरु तथा रंसाव आवां यथा ॥ ६५ ॥**

निर्बंधमिति हे रंभोरु तत्तस्मात् अमुं निर्बंधं युद्धमेव करोमीतत्राग्रहं प्रमुंच ननु त्वं किं न युध्यसे इतत्रतआह अहं तु कोमलत्वेन कमलतुल्यानि तवांगानि अतितीक्ष्णैः शरैर्हंतुं न उत्सहे न वांच्छामि तर्हि किमभिलषसीतत्राह चंचच्चन्द्रमरीचिभिः शीतलतलेषु चारामहर्म्यादिषुप्रोद्यता प्रेम्णा परिवृतौ संतौ आवां त्वमहं यथा रंसावः तथा कुरु ॥ ६५ ॥

**प्रबंधं तस्रामुं घटित मतियत्ना द्विषणया चणात् चीर्णं चक्रे खनि रथ गिरा मेकवचसा। अयं ते दृष्टांतः फलतुन्नपते प्राकृत जने परा चाहं मूलप्रकृति रविचिंत्योरुमहिमा ॥ ६६ ॥**

प्रवन्धमिति तस्य महिषस्य अमुं प्रवन्धं मन्दोदरीवर्णनरूपं कथा संग्रहं-
तेन महिषेण बुद्धयाअतिपन्नात् घटितमपि अथ सा गिरां खनिः वागजननी
तद्वाचा माकररूपा भगवती एकेनैव वचसा क्षणात् चोणं चक्रे निरस्त्रवती
कथं निरस्त्रवतीत्यत आह हे नृपते अयं मन्दोदरी वर्णनात्मकः तव दृष्टान्तः
प्राकृते प्रकृतिवशगे जने फलतु सफलं भवतु अथ तु न प्राकृतासीत्यत आह
अहं तु परास्वयमेव परा मूलप्रकृति रस्मि यद्वशगत्वा जनाः प्राकृता इति
गीयन्ते तर्हि प्राकृतवत्कथं भासीत्यत आह कोदृशो अविचिन्त्य उरु म-
हांश्च महिमा महत्त्वं यस्याः अतो नात्र तव तर्को युक्त इत्यर्थः तदुक्तं अतर्क्या
खलु ये भाव नतां स्तर्केण योजयेदिति ॥ ६६ ॥

पुंस्त्रीदेवादिरूपैः प्रतियुग मवितुं साधुवृत्तीं जनूंषि प्राज्यानि
प्राददेहं निखिलखलजनं हंतुमात्मेच्छयैव ।भ्रांति श्चेदत्र काचि
त्प्रकट मिय महं निश्चयं प्राप्नुहि त्वं कृत्वा युद्धं मयोच्चै र्यदि
स दधिगतं याहि पाताल मद्य ॥ ६७ ॥

प्राकृतवद्भाने ऽन्यदपि कारणमाह पुंस्त्रीति हे महिष अहं युगंयुगं
प्रति साधु वृत्तोन्सज्जनान् रक्षितुं निखिलं खलजनंच हंतुं आत्मेच्छयैव पुंस्त्रीदे
वादिरूपैः कृत्वा प्राज्यानि वहूनि जनूंषि जन्मानि प्राददे गृह्णामि अत्रार्थे
यदि तव मिथ्येयं वदतीति भ्रांति श्चेत्तर्हि जाता इय महं प्रकटं स्थितास्मि
मया सह उच्चै युद्धं कृत्वा निश्चयं प्राप्नुहि अथ चेत्सत्यमिग्ं वक्तीति त्वया
निश्चितं तदद्यपातालं याहि ॥ ६७ ॥

इति दितिजपतिः स्वसौंदर्यचाटूक्तिजालांतरे नागतां सम्य
गा लोच्यतां । परमथ समरा श्रितं ना भ्यमंस्ता खिलोपायसं
घे गते सर्वथा मोघतां अधिगतपरमाभिषंगी निषंगा त्समुद्धृत्य
चिक्षेप वाणां शितां स्तत्क्षणा दभिसुरजननीं यथा मेरूशृंगो
परिष्टा द्घन श्चंड वृष्टिप्रपातोल्कणान् ॥ ६८ ॥

इतीति स दिति जपति र्महिषः इत्थं वं सुसौंदर्यं च चाटूक्तिश्च ते एव
वंधनहेतुत्वा ज्जाले तयोरंतरे मध्ये अनागतां देवीं सम्यक् आलोच्य निश्चित्य

अथ समरा त्परंमूत्मनो हितं नाभ्यमंस्त युद्धमेवाधुना हितं नान्यदितत्यर्थः क्व लति अखिलेष्युपायसंघे सामादिरूपे सर्वथापि मोघतां निष्फलतां गते सति अथेति निश्चितत्र अधिगतः परमोभिषंगः पराभवो यस्र जाततिरस्कार इतत्यर्थः निषंगान् शितान वाणान् समुद्धृत्य तत्क्षणादेवतां सुरजननीं प्रति चिक्षेप तथाप्यस्मान् कश्चित्क्षोभो भूर्दति दर्शयितुं दृष्टान्त माह यथा घनो मेघो मेरुशृङ्गोपरिष्टात् चंडवृष्टि प्रपातादुत्थितकणान् क्षिपति तथा सति न तस्र कश्चित् क्षोभो भवति तद्वत्तस्रा अपीतत्यर्थः अभिषंगः पराभव इतत्यमरः अत्र चंडवृष्टिप्रपातेति दंडकनामाप्यभिहितं तदुक्तं वृत्तरत्नाकरे यदि हनयुगल ततः सप्तरेफा स्तदाचंडवृष्टि प्रयातो भवे द्दंडक इति विलघुरूपनगण इयमध्यलघुरूपरगणसप्तकोपेतः सप्तविंशत्यक्षरपाद श्चंडवृष्टिप्रयाताख्यो दंडक इत्यर्थः ॥ ६८ ॥

श्रीमाञ्शंभो श्चरणसदनीभूतहृच्छम्भुनाथो
लक्ष्मीनाथं कविपरिवृढं दर्शको सूतयं मां।
तेनो क्लीते महिष निधने गीतलक्ष्मी चरित्रे
लक्ष्मीकाव्ये विरति मगमत्सर्ग एषोपि षष्ठः ॥ ७० ॥

श्री मानितत्यादि पूर्ववत् ॥ ६९ ॥

इति श्रीलक्ष्मीकाव्ये महिषमंत्रिमंत्रचिन्तनं नाम षष्ठः सर्गः ६

इति श्री लक्ष्मीकाव्यव्याख्यायां षष्ठः सर्गः ॥ ६ ॥

---

**ओं नमो विघ्नहर्त्रे तत स्तापि तं लीलयाबाणजालं लुलापेन मुक्तं लुलावच्चणेन। तया सापत्र त्वं क्ता शु मुक्ता पृषत्का स्तयो रित्थमासी न्मिथो युज्जिगीष्वो: ॥ १ ॥**

ओं नमो विघ्नहर्त्रे अस्मि न्सर्गे महिषयुद्धं वर्णयिष्यते ततइति तदनन्तरं सा देव्यपि तेन महिषेण मुक्तं तं वाणजालं लीलयैव च्चणेन लुलाव चिच्छेद महिषोपि तया देव्या मुक्तान् वाणान् शीघ्रं विभेद इत्थं हननप्रतिहनने स्तयो र्मिथा जिगीष्वो र्जेतुकामयो: युत् युद्ध मासीत् अस्मिन्सर्गे भुजङ्गप्रयातमवृत्तम् भुजङ्गप्रयातं भवेद्यै श्चतुर्भि रिति लच्चणात् ॥ १ ॥

**निषंगान्नता वुद्धरंतौ न चापे समारोपयंतौ न चाभिच्चिपंतौ तदा लच्चिषाता मुभौ तत्र वानान् धनुष्टंकृति: शुश्रुवेश्रान्त मेका ॥ २ ॥**

निषंगादिति तदा उभावपि देवी महिषौ अतिहस्तलाघवात् निषंगा द्वाणादुद्धरन्तावपि नालच्चिषातां तत श्चापे वाणान् समारोपयंतावपि नालच्चिषातां ततश्च अन्योन्य मभिच्चिपंतावपि नालच्चिषातां परन्तु एका धनु ष्टंकृतिरेव अश्रांतं निरन्तरं शुश्रुवे ॥ २ ॥

**निषंगात्समुद्धृत्यनेहसाथेकं गुणारोपणे ऽथोशतं बाणजालं। समाकर्षणे भूत्सहस्रं तयो स्तत्समुत्चेपितं खे तु लच्चंव्यलच्चि**

अन्यदप्याश्चर्यमाह निषंगादिति अथतयो स्तद्बाणजालं निषंगात् समुद्धरणकाले एक मेवाभूत् अथ गुणारोपणकाले शतमभूत् तत: समाकर्षण काले सहस्र मभूत् अथ खे समुत्चेपितं सत् लच्चमितं व्यलच्चि ज्ञातम् ॥ ३ ॥

**जलास्त्रं स सा ज्वालनं सोथमैघं शिवाथा निलं सोथशैलं पविं सा। मुमोचौरगं दैत्यराट् गारुडं सा वभूवे त्थ मस्त्रोत्तरा स्त्रै स्तयो र्युत् ॥ ४ ॥**

जलास्त्रमिति स महिष: जलास्त्रं मुमोच सा तु तत्प्रतीकाराय ज्वालन माग्नेयास्त्रं मुमोच पुन: स मेघास्त्रं सा तु आनिलं वायव्यं सोथ शैल पर्वतास्त्रं

सा तु पविं वज्रास्त्रं स च ऊौरगं सर्पास्त्रं सा तु गारुडास्त्र मुमोच इत्थं तयो अस्त्रप्रत्यस्त्रैर्युद्धं बभूव ॥ ४ ॥

अथो भर्तुरीप्सन्हितं युद्धमध्ये समागत्य रोषात् पृषत्कै र्विषाक्तैः। द्रुतं दुर्धरश्छादयामास देवीं जगर्जोच्चकै र्मारितासीति भूयः ॥ ५ ॥

अथोइति अथ तयोर्युद्धमध्ये भर्तुर्महिषस्य हित मीप्सन् सन् दुर्धरो नाम मन्त्री समागत्यरोषात् विषलिप्तैः शरै स्तां देवीं शीघ्रं च्छादयामास भूयश्च त्वं मारितासीत्युच्चै र्जगर्ज ॥ ५ ॥

अथो जर्जरीकृत्य तद्वाणजालं शिवा कर्णकृष्टाशुगानां स्रजालम्। शरीरा दधो पातय त्तस्य भालं धरायां धरस्येव शृंगं विशालं ॥ ६ ॥

अथोइति सा शिवापि आकर्णकृष्टानां वाणानां मालया तस्य वाणजालं जर्जरीकृत्य धराया मधिकरणे धरस्य शैलस्य विशालं शृङ्गमिव तस्य भालं शरीरात् अधोपातयत् ॥ ६ ॥

मृतं दुर्धरं वीक्ष्य विक्षिप्तचेता स्त्रिनेत्रोथ जैत्रो द्विषां सैन्यनेता। शरैः सप्तभि स्सप्तसप्तिप्रकाशै र्जघाना शुता मीश्वरीं नश्वरात्मा ॥ ७ ॥

मृतमिति अथ तं दुर्धरं मृतं वीक्ष्य विक्षिप्तं चेतोस्य तथा द्विषां जयनशीलः सैन्यस्य नेता सत्रिनेत्रनामा मंत्री तामीश्वरीं नश्वरात्मा सन् रविप्रकाशैः सप्तभिः शरै शीघ्रं जघान ॥ ७ ॥

अथानागतानेव तानुग्रधारानभांक्षी दभीक्ष्णं रुषा लोहिताक्षी। त्रिशूलेन वीतं विधाय त्रिनेत्रं ततश्चक्रवीतिस्म वीतासुमंबा ॥ ८ ॥

तथति सापि रोषेण निरंतरं रक्तलोचना देवी अनागतानेव तान् उग्रधारान् शरान् अभांक्षात् आमर्दितवती ततश्च त त्रिनेत्रं त्रिशूलेन वीतं प्रोतं कृत्वा वीतासुं गतप्राणंचकरोति स्म अतिशयेन करोतिस्मेत्यर्थः ॥ ८ ॥

तथा तं समीच्यां धकोप्युज्झितासं, निरातंक एवां तकामो भ्यगात्तां। गदां तूर्ण मुत्तोल्य दंभोलितुल्या मथा पातय त्सिंह भाले विशाले ॥ ९

तथेति अथ तं त्रिनेचं गतप्राणं वीच्य अंधकनामापि नायकः तथैव निर्भय एव अंतक वत् ताम भ्यगात् अथ शीघ्रं वज्रतुल्यां गदा मुत्तोल्य विशाले सिंहस्य भाले अपातयत् ॥ ९ ॥

विषह्याथ सिंहोपि तस्याः प्रहारं नखैस्तस्य चो त्पाट्य वक्षः कपाटं। चखादामिषं खंडखंडी कृतं द्रागजगर्जा तिसौहित्य मेत्योच्चकैः सः ॥ १० ॥

विषह्येति सिंहोपि तस्याः गदायाः प्रहारं विषह्यनखैस्तस्यांधकस्य वक्षोरूपं कपाटं उत्पाट्य अथ खंडखंडीकृतं तस्य मांसं शीघ्रं चखाद ततश्च अतिशयेन सौहित्यं तृप्तिं प्राप्य उच्चैर्जगर्ज ॥ १० ।

ततश्चामरश्चा मरारिश्चमूराट् द्विषां वारणोवारणारूढ एत्य। महाशक्तिमान् शक्ति मादाय हस्ते तदास्य त्तदा स्वं प्रति प्राणहर्त्रीम् ॥ ११ ॥

ततइति तदनन्तरं अमराणामरिः चामरनामा सेनाधिपः द्विषां च वारणः गजोपर्यारूढः सन् प्राप्य अथ महाशक्तिमान् महापराक्रमः प्राणहर्त्रीं शक्तिं हस्तेन गृहीत्वा तदा तस्या आस्यं प्रतिआस्यत् चिप्तवान् स्थितो वैरिणां वारणोवारणोद्ध इति पाठेतु वारणोद्ध गजश्रेष्ट इत्यर्थः मतल्लिकामचर्चिका प्रकांड मुद्धतल्लजौ प्रशस्तवाचकान्यमूनी त्यमरः ॥ ११ ॥

ततस्सा पि हुंकारमात्रा त्परास्तां शिवा तामभांक्षी द्द्रुतं निष्प्रभावाम्। स चिक्षेप शूलं ततो जातरोषः शरैश्चिच्छिदेत च्चरंभेव देव्या ॥ १२ ॥

ततइति सा शिवापि हुंकारमात्रेणैव परास्तां अत एव निष्प्रभावां तां शक्तिं शीघ्रमभांक्षीत् ततः सोपि जातरोषः सन् शूलं चिक्षेप तच्च शूलं देव्या रंभा कदलीव चिच्छिदे ॥ १२ ॥

अथोत्प्लुत्य सिंहेन तत्कुंभिकुंभांतरे कुर्वता तेन भीमं नियुद्धं। समाक्रांत उच्चैः सुरारि र्विरेजे नगारूढ शाखीवदावावलीढः॥ १३॥

अथेति अथ तस्या चामरस्य यः कुम्भोगज स्तस्य यौ कुम्भौ तयो रन्तरे उत्प्लुत्य तेन चामरेण सह भयानकं नियुद्धं बाहुयुद्धं कुर्वता सिंहेन उच्चैःसमाक्रान्तः स सुरारि र्विरेजे क इव दावानलेन अवलीढः शैलोपर्या रूढो वृक्ष इव अत्र शैलरूपो गजस्तदा रूढवृक्षरूप श्चामरः तदवलेह कदावाग्निरूपः सिंहः नियुद्धं बाहुयुद्धं इत्यमरः॥ १३॥

ततो युध्यमाना वुभौ तत्र तस्मा द्गजा त्येततु र्भूमि भागेति वेगात्॥ नखानख्यथासी त्तलातल्यनल्पं तयोस्तत्र युद्धं रदा रद्यभीक्ष्णम्॥ १४॥

ततइति तदनन्तरं तत्र गजकुम्भे युध्यमानौ ता वुभावपि अतिवेगात् गजात् विस्तीर्णावधौ भूमिभागे पेततुः तत्रापि तयोः नखैश्च नखैश्च प्रवृत्त मिति नखानखि एवं तलातलि रदार्रदि दन्तादन्ति अनल्पं युद्धं सन्तत मासीत्॥ १४

स वै चामर स्तन्नखोत्कीर्णकायस्रवद्रक्तधाराविचित्रीकृतांगः। वभौ केसरी वामुना युध्यमानो महत्वाय नूनंमहद्भीरणोपि॥ १५

सइति अथ तस्य सिंहस्य नखै रुत्कीर्णात्कायात् स्रवन्तीभि रक्तधाराभि र्विचित्रो कृतानि किर्मीरितान्यङ्गानि यस्य तादृशः स चामरः अमुना केसरिणा युध्यमानः केसरीव वभौ सिंहस्य हि कृष्णरक्तवर्णा न्यङ्गानि भवन्ति हि यतः महद्भिः सह रणोपि महत्त्वाय भवति किं पुनः सामेति भावः॥ १५॥

अथो त्यत्य सिंहो जिघांसू रिपुं खे निपत्यो परिष्टा च्च तस्या तिवेगात्। अकार्षीत्तमा मुत्तमांगं तदीयं पृथक्कायतो नुत्तमाभं करेण॥ १६॥

अथति अथ तं रिपुं हन्तु मिच्छुः स सिंहः तावत् खे उत्पत्पततश्च अतिवेगात् अस्योपरिष्टात् निपत्य अनुत्तमः आभा यस्य तादृशं तस्य शिरः करेण कायात् पृथक् आकार्षीत् तमां अतिशयेन कृतवानित्यर्थः॥ १६॥

अथो दग्र मुग्रमा मग्रास्त्रशस्त्रैःकरालोग्रवीर्योद्धतादींश्च युद्धे।
चणादेवनिर्मूलयामासदेवीयथातूलराशीन्हुताशःसमिद्धः ॥१७

अथेति अथ उग्रं उग्रास्यं करालं उग्रवीर्यं उद्धतं आदिना महाहन्वादींश्च सा देवी उग्रे रस्त्रैःशस्त्रैश्च चणादेव निर्मूलयामास नाशयामास कथं यथा समिद्धः प्रज्वलितो हुताशोऽग्निः तूलराशीन्नाशयति ॥ १७ ॥

ततो देवताः पुष्कलां पुष्कलस्थाः सदापुष्पितां पुष्प वृष्टिं किरंतः। समं चारणै स्सिद्धगंधर्व संघै र्जयेति प्रमोदा ज्जगु र्वाच मुच्चैः ॥ १८ ॥

ततइति तदनन्तरं पुष्कलां बहुलां सदैव पुष्पितां च पुष्पवृष्टिं किरन्तः पुष्करस्था आकाशस्थ देवताः चारणैः सिद्धगन्धर्वसंघैश्च सह प्रमोदात् जयेति वा चमुच्चैर्जगुरत्र देवता शब्दस्य स्त्रीत्वा त्तद्विशेषणस्यापि स्त्रीत्वं व्योम पुष्कर मम्बर मित्यमरः ॥ १८ ॥

अथेत्थं च मूनायका न्वीक्ष्य सर्वा न्सु पर्वेश्वरश्या हतानर्वशत्रुः। ससाखर्वगर्व कलंबानदभ्रा न्धृतालीढपादो मुमोचाभिदेवीं ॥

अथेति अथ अर्वशत्रु र्महिषः इत्थंसर्वान् नायकान् सुपर्वणां देवना मीश्वरा ब्रह्मादय स्तेषामपीश्याहतान् वीक्ष्य अखर्वः अनल्पो यो गर्व स्तेन सहितं यथा स्यात्तथा बहून् बाणान् देवीं प्रति मुमोच को० महिषः धृतः स्थापितः आलीढेन न्यासविशेषेण पादो येन प्रत्यालीढं समपादो विशाखो मण्डलं चेति धन्विनां पंचपदस्थानानि तत्रार्ध्वस्ववामपादप्रसादे दक्षिणपाद संकोचे प्रत्यालीढं तता विपर्य्यये आलीढं पादयो स्तुल्यरूपतया धारणं समपादः वितस्त्यन्तरेण स्थिते पादद्वये विशाखः मण्डलाकृत्या पाददृयधारणं मण्डल स्यात् प्रत्यालीढ मालीढ मित्यादिस्थानपंचक मित्यमरः ॥ १९ ॥

विधाय द्विधा तान् क्रुधा तिग्मधारान् सुधाभोजिसू नैंकधा तेन मुक्तान्। गदायाः प्रहारेण मोघेतराया रथा न्पातयामास मूर्ताल मेनं ॥ २० ॥

विधायेति अथ सुधा भोजिनां देवानां मूर्च्छितापि तेन महिषेण नैकधा मुक्तान् तीक्ष्ण धारान् तान् वाणान् क्रोधेन द्विधा कृत्वा मावेतरायाः सफलाया गदायाः प्रहारेण एनं महिषं मूर्तालं मूर्च्छितं कृत्वा रथात्पातयामास भूमा वितिग्मेषः ॥ २० ॥

स गाढप्रहारेण विच्छिन्नचेता त्रुटच्चारुकोटीरकोटि र्गतश्रीः।
असृक्पंकिलासग्रोरजोधूसरात्मा प्रकीर्णैः कचैः कौ रराजेव रंकः॥ २१ ॥

सइति महिष स्तस्या गदाया गाढप्रहारेण विच्छिन्नचेताः सन् कौ पृथिव्यां प्रकीर्णैः कचै रुपलक्षितः रंको दरिद्र एव रराज कीदृशः रया त्वतनात त्रुटिता चारुकोटी यस्य मुकटस्य कोटिर्यस्य तथा रजसा धूसर आत्मा शरीरं यस्य ॥ २१ ॥

सहित्वा मुहूर्तां महामूर्तितां द्राग्वितंद्रो भिदुद्राव तां दानवेंद्रः। अभद्रं विनर्दन्गदायाः प्रहारं मृगेंद्रस्य भाले तिरौद्राननो दात्॥ २२ ॥

सइति अथ सदैत्येंद्रः मुहूर्तमात्रात् महामूर्च्छितत्वं विहाय शीघ्रं वितंद्रो निरलसः सन् प्रति दुद्राव अथ अभद्र मशुभं शब्दं कुर्वन् सन् अति रौद्राननो भूत्वा सिंहस्य भाले गदायाः प्रहारमदात् ॥ २२ ॥

स सिंहो पि तं रंहसा युद्धरंगे सुतीक्ष्णैः कराग्रै रुदग्रप्रभावः।
परं लोहितीभूतकायं समंताच्चकारांशुमालीव कीलालवाहम्

सइति उदग्रो ऽधिकप्रभावो यस्य सः सिंहोपि तं परं शत्रुं रंहसा वेगेन युद्धरङ्गे अतितीक्ष्णैः कराग्रैर्नखैः कीलाल रक्तं वहतीति तं अत एव लोहितीभूतो रक्ती भूतः कायो यस्येति तादृशं समंतात् चकार कैः कं क इव अति तीक्ष्णैः कराणां किरणानां मग्रैः कीलालवाहं एवं अधिक प्रभावः अंशुमाली सूर्यो यथा रक्तो करोति कीलालं रुधिरंजलं इति १मः ॥ २३ ॥

स हित्वा थ त त्पौरुषं पौरुषाढ्यः क्षणेनो ज्झित स्तत्क्षणेनै व मायी। शरीरं हरे र्ईश्वरातिः प्रपेदे विरुद्धा हि चेष्टास्ति दुष्टस्य चेष्टा ॥ २४ ॥

सइति अथ पौरुषेण पराक्रमेण आढ्यः स महिषः पुरुषस्येदं पौरुषं वपु स्त्यक्त्वा तथा क्षणेन उत्सवेन त्यक्तः सन् तत्क्षणेनैव मायावान् हरे अर्थेंद्रस्य प्रति भटत्वात्सिंहस्य वा अरातिः शत्रुः हरेः सिंहस्य शरीरं प्रपेदे पुरुषरूपं त्यक्त्वा सिंहरूपो भूदित्यर्थः कुतएवं विधो भूदतआह हि यतः दुष्टाणां विरुद्धा एव चेष्टा सदैवेष्टा भवन्ति प्रतिभटं सिंहं दृष्ट्वा स्वयमपि विरोधितया सिंहो भूदितिभावः यद्वा पौरुषाढ्यत्वे पि पौरुषत्यागात् तथा क्षणोज्झितत्वे पि तत् क्षणोपहितक्रियोपेतत्वात् तथा हरिशत्रुत्वे पि हरिशरीरग्रहणा द्विरुद्धचेष्टत्वं श्लेषेण व्यज्यते ॥ २४ ॥

स विस्फालय न्वालधिं क्ष्मा वरालं विधुन्वन्सटाः प्रोत्कटाः खे कडाराः सशूत्कार माराव मुच्चैः प्रकुर्वन् द्रुतं व्याजसिंहो भि दुद्राव सिंहम् ।' २५ ॥

तच्चेष्टमाह सइति स व्याजेन छलेन धृतसिंहरूपो महिषः शीघ्रं तं सिंहं प्रतिदुद्राव किं कुर्वन् अरालं कुटिलं वालधिं पुच्छं क्ष्मा पृथिव्यां विस्फालयन् ताडय न्सन् तथा प्रोत्कटाः कडाराः कपिलाः तृणवह्नितुल्यवर्णा इति यावत् सटाः खेविधुन्वन् कंपयन् सन् तथा शूत्कारैः सहित मारावं शब्दमुच्चैः प्रकुर्व न्सन् कडार स्तृणवन्हिवदिति शब्दार्णवः ॥२५॥

स तं धोरणं चंडिकाया निकाय श्छलानांगिरिप्रख्यकायः करा ग्रैः। रुषा दारय न्नीशदारानथो चे इतं सिंह मद्या त्मना विद्धि सार्धम् ॥ २६ ॥

स इति स छलानां निकायो गृहरूपः गिरिप्रख्यकायस्य तं चंडिकाया धोरणं वाहनं सिंहं रोषेण नखै दारयन्सन् अथ ईशस्य परमात्मनो दारान् पत्नी

भगवती मृचे हेदेवि अद्य आत्मना सह असुंसिंहं हतं जानोहि यद्वा हे देवि सा त्वं आत्मना कृत्वा मांसिंहरूपं अंध खंडोभूतं हतं जानोहि ॥२६॥

**अथेति ब्रुवाणाय तस्मै सगर्वं निजं वाहनं कुर्वते दौर्णदेहं। अतिभ्रूकुटीभ्रूद्वयीभंगभीमीभवद्भालभागाभवानीचुकोप। २७**

तथेति इत्येवं स गर्वं ब्रुवाणाय तथा निजं वाहनं सिंहं दोर्णं देहं कुर्वते तस्मै व्याजसिंहाय सा भवानो चुकोप कोदृशो अति भ्रूकुटया जनितेन भ्रूद्वयी भंगेन भीमी भवन् भालभागो यस्या: ॥ २७ ॥

**तत: शूकतिग्माग्रकै र्दंदशूकातिरौद्रै: शरै: प्राणसंहृत्यनूकै:। असमर्त्यारि भूपं धृतेभेंद्ररूपं शिवान्हाय विव्याध तंव्याध वत्मा॥**

ततइति तत: कोपानन्तरं सा शिवा तं धृतसिंहरूपं दैत्यराजं शरै: व्याधो मृगयुस्तद्वत् अह्नाय शोघ्रं विव्याध को० शरै: शूकोयवादीना मति तीक्ष्णोग्रस्तद्वत् निम्नो ऽग्रभागो येषां तथा दंदशूक: सर्पस्तद्वदति रौद्रै: अत एव प्राणानां संहृति: संहार एव अनूकं शोलं येषां तै: शूको स्त्री श्लक्ष्ण तोक्ष्णाग्रे इत्यमर: अनूकं तु कुले शोले इतिहैम: ॥ २८ ॥

**स सैंहीं विहाय क्षणा देव मूर्तिं शिवावाण विद्वा मथ च्छद्मसद्म महाकौंजरी मग्रहीदंजनाद्रिं रुजातर्जयंतीं तनूमूर्जसोग्राम्**

सइति अथ स: च्छद्मनां च्छलानां सद्मगृहरूपो महिष: शिवा या वाणै विंद्वां तां सैंहों मूर्तिं क्षणादेव विहाय महाकौंजरीं तनूं अग्रहोत् सिंहरूपं त्यक्त्वा गजरूपो ऽभूदित्यर्थ: कोदृशीं स्वरुचा अंजनाद्रिमपि तर्जयंतीं भर्त्सयतीं अतिकृष्णवर्णा मित्यर्थ: तथा ऊर्जसा उग्रां ॥ २९ ॥

**विभिद्यत् स्वगंडस्रवद्दानवारिर्गभीराणिकुर्वन्महागर्जितानि। विषाणद्वयीच्छद्मना काव्हपंक्तीद्वयोच्चैर्दधान: सरेजे घनाभ: ॥ ३० ॥**

विभिद्यदिति स व्याजगज: घनाभो मेघ वत् रेजे अतिकृष्णवर्णत्वात् कोदृशो मदेनविभिन्नात् यत: स्वगंडस्थलात् स्रवत्दानस्य मदस्य वारिजलं

यस्य तथा गंभीराणि महागर्जितानि कुर्वन् तथा दंतद्वयी छलेन उच्चैर्वकपंक्ती इव दधानः मेघापीडृग्गुणविशिष्टो भवति बकः कवृह इत्यमरः ॥ ३० ॥

स उत्पाट्य कूटं महोच्छ्राय मद्रेः करेण प्रचिक्षेप तां प्रत्य थो च्चैः । चकार तृणः सा त मायांत मारा च्छरै र्वज्रकल्पैः च णादेव देवी ॥ ३१

सइति अथ सः करेण शुंडादंडेन महोच्छ्रायं अद्रेः शृंगमुत्पाटय तां प्रति उच्चैः चिक्षेप सा देव्यपि तं गिरि शृंगं आयांतं आरात् दूरादेव वज्रकल्पैः शरैः क्षणादेव अणुश्च चकार वज्रेण हि गिरि नाशो भवति ॥ ३१ ॥

कराग्रैः करींद्रं मृगेंद्रोऽपि कुंभद्वय ग्रासबद्धस्पृहस्तं ददार चकर्षाशु तं सोपि कार्कस्वराद्रिं यथा कज्जलाद्रिः करेणा ति रोषात् । ३२ ॥

कराग्रैरिति स सिंहोपि तं करींद्रं नखैः ददार कीदृशः तस्य कुंभद्वयग्रासे बद्धा स्पृहा येन स करींद्रापि तं अतिरोषात् करेण शीघ्रं चकर्ष कथं यथाकार्तस्वराद्रिं सुमेरुं कज्जलाद्रि कर्षेत् ॥ ३२ ॥

दृढं कर्षतः सिंह मस्यो ग्रशुंडां चकर्ताथ खड्गेन रंभा मिवां बा ततो रक् प्रवाहं वहन्सो थ रेजे खरु च्छिन्नसानु र्यथा गैरिकाद्रिः॥ ३३ ॥

दृढमिति अथाम्बापि दृढं यथा स्यात्तथा सिंहं कर्षत स्तस्य करिणः उग्रं शुंडा रंभा मिव खड्गेन चकर्त अथ सः करी ततः छिन्न शुंडातो रुधिरप्रवाहं वहन्सन्रेजे कथं यथा खरुणा वज्रेण छिन्नः सानुरस्य तादृशो गैरिकाद्रिः राजेत् ॥ ३३ ॥

अथो चिंतयामास चित्ते मुमूर्षु र्जिहासन्वपुः कौंजरं लून शुंडम् । शरीरं श्रये कस्य सिंहांतरिक्तं यदु द्वीक्षणेनैव देवी विभीयात् ॥ ३४ ॥

अथोइति अथ समुमूर्ष मरणासन्नो महिष: लूनाक्लिन्ना अंडायस्य ताह शं तत्कोजरं वपु स्त्यक्त् मिक्छन् चित्त चिंतयामास किमि त्यतआह अधुनाहं कस्य शरोरंश्रये यच्छरोरं सिंहादतिभिन्नं अधिकं भवेत् यस्य च दर्शनेनैवेदेवी वभीयात् भयं प्राप्नुयात् ॥ ३४ ॥

विचिंत्येति सो भूदथा ष्टापदा द्रा गभुजिर्यस्य शार्दूल सिंहादि पायाः। तदास्यं गिरेः कंदराभं हरीणां शतं निर्गिरे दुग्गिरे त्तेषु नैकम् ॥ ३५ ॥

विचिंत्येति अथेति विचिंत्य सः शोघ्रं अष्टापद नामा पक्षि विशेषो ऽभूत् तत्प्रभावं दर्शयति यस्याष्टा पदस्य शार्दूल सिंह हिपाद्या एव भुक्ति र्भोजन मस्ति तस्य च गिरेः कंदरतुल्यं मुखं सिंहानां शतमपि निर्गरेत् भक्षयेत् तेषु सिंहेषु च एक मपि सिंहं नोद्गिरेत् नोद्दमेत् अष्टापदः शरभः तत् स्वरूपं तु कालिका पुराणे ततः शरभरूपं तं महादेव मुमापतिं ददर्श यत्र पोत्रो च स्मशतं शिरसा विष्णु सुदीर्घ नासा न स्वरं कृष्णांगार समप्रभं दीर्घं वक्त्रं महाकाय मष्टदंष्ट्रा समन्वितं बिभ्रतं सि कटिं पुच्छं दीर्घ कर्णं भयानकं चतुरः पृष्ठतः पादानधरे चतुरस्तथा कुर्वंतं घोरमाराव मुत्सृतं तं पुनः पुनरिति शरभ वराहयो र्युद्धे प्रोक्तं ॥ ३५ ॥

स कुर्वन्महाभैरवाराव मुच्चै रभीयाय पंचाननं प्सातुकामः तथो द्वीच्य सा सिंहरक्षां विधित्सु र्वबंधो द्यमं तद्वधायाश्व वंध्यम् ॥ ३६ ॥

सइति सो ऽष्टापदः महाभैरव माराव मुच्चैः कुर्वन् पंचाननं सिंहं प्सातं भक्षितुं कामो यस्य ताद्दशः सन् अभोयाय प्रत्यायया सा देव्यपि तथा भूतं वोक्ष्य सिंहस्य रक्षां विधातु कामा अवंध्यं सफलं द्युद्यमं तस्य वधाय शीघ्रं ववंध ॥ ३६ ॥

प्रचिच्छेद खड्गेन तस्यो त्तमांगं रुषा व्याकुलीभूतनेत्रत्रयी सा

बहु नीत्थ मासाद्य रूपाणि मायी मुहु र्माहिषीं मुर्ति माहिष्ट

दुष्टः ॥ ३७ ॥

अथ सुत्तमं ववंधेत्यतआह प्रचिच्छेदेति सा देवी तस्य द्वापदस्य खड्गेन शिरः प्रचिच्छेद कीदृशी रुषाव्याकुली भूतानेत्राणां त्रयी यस्य अथेत्यं स मायी महिषः बहून्यपि रूपाणि आसाद्य पुनः पुनः प्राप्य पुनः स दुष्टः महिषोऽेव सहजां स्वमूर्ति आहिष्ट प्राप अहि गतौ धातुः ॥ ३७ ॥

निदाघार्कदुर्दर्शचक्षुःप्रतापो दृषत्कर्कशात्मा तमःपुंजरोचिः ॥

बभौ तर्कसंपर्कशून्योग्रवीर्यो रयोद्रेकतो मंथरीकृत्य वायुम् ॥

निदाघेति स महिषः रयस्य वेगस्य उद्रेकेन आधिक्यात् वायुमपि मंथरी कृत्य मंदगामिनं कृत्वा बभौ कीदृशः निदाघ कालीनार्कवत् दुर्दर्श चक्षुषः प्रतापोयस्य तथा दृषत् शिला तद्वत् कर्कश आत्मा यस्य तथा तमः पुंजव द्रोचि यस्य तथा तर्कस्य विचारस्य संपर्केन संगेन शून्यं रहित मुग्रंवीर्यं यस्य अचिंत्य पराक्रम इत्यर्थः ॥ ३८ ॥



स लांगूलविस्फालनेनांवुराशिं समुच्छाल्य विप्लावयामास

शैलान्। खुरचोदितक्ष्मातलोद्भूतधूलीचयै रंधय न्रोदसी चा

खिलाशाः ॥ ३९ ॥

सइति स महिषः लांगूलस्य पुच्छस्य विस्फालनेन अंवुराशिं समुच्छाल्य शैलान् विप्लावयामास किंकुर्वन् खुरैः चोदितान् निहतान् क्ष्मातलात् उद्भूतै धूलीचयैः कृत्वा रोदसो द्यावाभूमो अखिलाश्च आशा दिशः अंधी कुर्वन् ॥ ३९ ॥

उरुश्वासवातै स्तदीयै र्महांतैः ख उत्क्षपिताः पर्वताः पेतु रु-

र्व्याम्। यथा कल्पकालानिलै रीर्यमाणाः कुलक्ष्माभृतोऽनात्म

निघ्नं भ्रमंतः ॥४० ॥

उर्वीति तस्य महिषस्य उरुश्वासजन्यै र्वातैः महांतः पर्वताः खे उत्क्षिपिताः संतः पुन रुर्व्यां पेतुः कथं यथा कल्पकालीनै रनिलै र्वायुभि रितस्ततः प्रेर्यमाणाः कुलाचलाः अनात्मनिघ्नं अस्वाधीनं भ्रमन्तः संतः पुन रुर्व्यां पतन्ति तद्वदित्यर्थः ॥ ४० ॥

**तदुच्छृंखलोद्भूतशृंगप्रभिन्ना ययुः खंडखंडं महावारिवाहाः । दिशोनेडमूकीकृता स्तेन रावै र्महावर्तकारावधिक्कारकृद्भिः ।**

तदिति तस्य च उच्छृंखलमयं यथा स्वच्छन्द मिति यावत् उद्भूतैः शृङ्गैः प्रभिन्ना महांतो मेघाः खंडस्यापि खंडं यथा भवति तथा ययुः तेन महिषेण कृतमहावर्तकाः प्रलयकालमेघा स्तेषा मप्यारावाणाधिक्कारं कुर्वन्तीति तद्वशैः रावैः सर्वा अपि दिशि अनेड मूकीकृताः वधिरा मूकाश्च कृता इत्यर्थः त्रिलिङ्गोनेड मूकः स्या च्छठे वाक्श्रुति वर्जिते इति रभसः ॥ ४१ ॥

**ममर्दाथ देव्या गणा स्ता नगण्यान्चरप्राकृतीनां खुराणां प्रहारैः । विषाणोग्रकोटयाथ कांश्चिद्विरावै र्जवेनापरान् कांश्चि दुच्छ्वासवातैः ॥ ४२ ॥**

ममर्देति अथ स महिषः तान् निश्वासजन्यान् अगण्यान् देव्यागणान् चरप्राकाणां खुराणां प्रहारैर्ममर्द कांश्चित्, शृङ्गयो रुग्रेणाग्रभागेन अथ कांश्चित् रवैरेव अपरांश्च भ्रमणवेगेन कांश्चित्, उच्छ्वासवातै र्ममर्द ॥ ४२ ॥

**स तत्प्रामथं यूथ मित्थं पृथीयः प्रमथ्य प्रमाथी युयुंथाथ पृथ्वीम् । अथो वाच तां चंडिके त्वा मिदानीं हनिष्यामि सार्धं सुरै स्त्वत्सहायैः ॥ ४३ ॥**

सइति स प्रमाथो चोभकृन्महिषः अतिशयेन पृथु बहुलं तत् प्रमथानां देव्याः परिषदानां यूथं प्रमथ्य ततः पृथ्वीमपि युयुंथ जघान युथ्यादीनां हिंसार्थकत्वनायंता अथ च तां देवी मुवाच हे चण्डिके त्वत्सहायैःसुरैः सह इदानी मेव त्वां हनिष्यामि यद्वा हे चण्डिके त्वं सहाया येषां तैः सुरैः इदानीं त्वा

मह्दं हनिष्यामि तव सायुज्यं प्राप्स्यामि हन हिंसागत्योः अयमर्थः यां पदवीं तव भक्ताः सुरा यास्यन्ति तामहमपि त्वद्धस्तात्प्राणां स्त्यक्त्वा यास्यामि ॥४३॥

न याव द्रुषं त्वय्यकार्षं पुराहं कृपाकृशहृत्ते सवस्ताव दासन्। इदानीं तु मे क्रुध्यतः स्थातु मग्रे न कालोपरालं काव-लिप्तेवला त्वम् ॥ ४ ४॥

ननु पूर्वं कस्मान्न हतवानसीत्यत आह नेति पुरात्वहं कृपया कृशं हृत् यस्य तादृशः सन् त्वयि विषये यावत् रुषं क्रोधं नाकार्षं न कृतवान् तावत् कालमेव तव असवः प्राणा आसन् कृपयैव न हतासीत्यर्थः इदानीं तु त्वत्त्वा क्रुध्यतो ममाग्रे असौ कालोपि स्थातु मलं समर्थो नास्ति तर्हि हे अवलिप्ते गर्ववति नामत एव या ऽवलासि सा का समर्थासि न कापीत्यर्थः यद्वा अयि कृपाकृशहृत् दयापूर्णहृदये यावत्तु अहं रुषं योद्धुं क्रोधं नाकार्षं तावदेव पूर्वं ते मदीया असवः आसन् हे महालक्ष्मि इदानीं तु अतो मत्क्रोधात् हेतो तव क्रुधि क्रोधे सति तवाग्रेस्थातुं कालोपि न समर्थः तर्ह्यहं कुतः अत्र हेतुः हे कावलिप्ते कं ब्रह्माण मवति मधुकैटभ्यां रक्षतीति कावो विष्णु स्तेन सह लिप्ते ग्रथित्वा सम्मिलिते यत स्त्वमवलासि नास्ति वलसमोऽन्यो यस्या इति तादृश्यसि ॥ ४४ ॥

उदीर्येति साक्षेप मुत्पाट्य शैला न्विषाणाग्रकोट्या प्रचिक्षेप नैकान्। रजस्सात्कृता स्तच्छरै स्ते य रेजु र्यथा पंचभूताणवः खि चपांते ॥ ४५ ॥

उदीर्येति स इत्येवं साक्षेपं सतिरस्कारं मुक्त्वा शृङ्गयो रग्रेणाग्रभागेन अनेकान् शैलान् उत्पाट्य तां प्रति चिक्षेप अथ तस्या देव्याःशरैः रजस्सात्कृता स्ते शैला रेजुः कथं यथा चपांते महाप्रलये पंचानां भूतानां पृथिव्यादीनां परमाणवः खे राजन्ते चिरं खे खेलन्ति प्रचुरपरमाणुप्रततय इति कणाद मतोक्तेः ॥ ४५ ॥

स भूयो पि गर्जं स्त्वया वादि रोषाद्रे गर्ज गर्ज क्षणं मूढ या वत् पिबाम्यासवं तावदेवासव स्ते मुहु र्वसवो गर्जिता-सौ सवाशैः ॥ ४६ ॥

सइति अथ भूयोपि गर्जन् स महिषः तया देव्या रोषात् अवादि कथि-तः हे मूढ त्वं क्षणमात्रं गर्ज गर्ज यावदहं मासवं मद्य पिबामि तावदेव हि असवः प्राणाः सन्ति मुहुस्त्वयि हते सति असौ वासव इन्द्रः सवाशै र्देवैः सह गर्जिता गर्जगर्जेति संभ्रमात्पुनरुक्तिः ॥ ४६ ॥

गदित्वे त्यथादाय तत्कालधौतं सुराभाजनं राजराजार्पितं-यत्। पपौ वारुणीं तां मुहु र्मंत्रपूतां सुधा मप्य नाहृत्य या स्वादनीया ॥ ४७॥

गदित्वे ति अथेति गदित्वा सा भगवती कुवेरेण यदर्पितं सौवर्णं सुरा-भाजनं तत् गृहीत्वा मन्त्रै र्हंसःशुचिषदित्यादिभि राद्रै ज्योतिरित्यादिभिश्च पूतां तो वारुणीं मुहुर्मुहुः पपौ तां कां या वारुणी सुधामपि अनाहृत्य स्वा स्वादनीया सुधातोप्यधिकस्वादु रितर्थः ॥ ४७ ॥

महानंदसंदोहकंदैकरूपां पशुत्वोग्रपाशच्छिदाकोविदां सा। वभासे सुरां तां पिवंती सुरेशी समोदं मदाघूर्णिता रक्त-नेत्रा ॥ ४८ ॥

महेति सा सुरेशी तां सुरां पिवन्ती वभासे कीदृशी समोद यथा स्यात्त था मदेनाघूर्णितानि अतएव रक्तानि नेत्राणि यस्याः सुरां महानन्दसदोहस्य कन्दः कारणमेवैकं रूपं यस्याः आनन्दं ब्रह्मणो रूपो तच्च देहे व्यवस्थितं तस्याभिव्यञ्जकं देवि कुलद्रव्यं प्रकीर्तित मिति पार्वतीं प्रति शिव वाक्यं तथा पशु त्वमज्ञानि त्वमेवोग्रः पाश स्तस्य छिदायां छेदने कोविदां निपुणां तदुक्तं इदं पवित्रममलं पिवामि भवभेषजं पशुपाश समुच्छेदकारणं भैरवोतदिमिति दमिति द्रव्यम् विशेषस्त्वागमादवसेयः अतिगोप्यत्वान्नेह प्रकाशितः ॥ ४८ ॥

सुराभाजनीभूत वक्त्रारविंदा परिभ्रामितोत्फुल्ललीलारविं-
दा। मुदो ऽदत्त वंदारुवृंदारकाणां सुवृंदाय मातेव सा दार
काणाम्॥ ४९॥

सुरेति तदानीं सा देवी वन्दारूणा मभिवादनशीलानां वृन्दारकाणां देवानां वृन्दाय मुदः अदत्त केषां कैव दारकाणां वृन्दाय मातेव कीदृशी सुराया भाजनीभूतं वक्त्रारविन्दं यस्याः मुहुर्मुहुः पानात् तथा परितो भ्रामितं लीलारविन्दं यया॥ ४९॥

अथा मुष्य दंभैकरूपस्य रांभेः सुधाभोजिवाधानिवद्धैकबुद्धेः।
अवंध्यं ववंधो द्यमं सा वधार्थं त्रिलोकीमनःशल्य मुद्धर्त्तुकामा

अथेति अथ सा देवी अमुष्यदंभैकरूपस्य देवानां वाधायां निवद्धैकबुद्धेश्च रांभे र्महिषस्य वधार्थं अवंध्य मुद्यमं ववन्ध कीदृशी त्रिलोक्या मनसः शल्य मुद्धर्त्तुकामा॥ ५०॥



ततोलक्ष्य मुत्पत्य दम्भोलिपातं ययाता द्रितुल्यस्य तस्यो परि-
ष्टात्। पदा क्रम्य गाढं त्रिशूलेनकण्ठे शिलाकर्कशे तं जघा-
नाघहंत्री॥ ५१॥

किं विध मुद्यमं ववंधेत्यत आह ततइति तदनन्तरं सा देवी अतिलाघवात् अलक्ष्यमेव उत्पत्य तस्याद्रि तुल्यस्य महिखस्य चोपरिष्टात् दंभोलि वज्रं तद्दत्पातो यस्यां क्रियायां तथा पपात अथ तं गाढं पादेनाक्रम्य शिलावत्कर्कशे कंठे त्रिशूले तं जघान कीं॰ सा अघहंत्री तं घ्नन्ती स्वपादस्पर्शेन तस्य रिपोरपि पापमपि जघाने त्यर्थः तदुक्तं लोकान् प्रयांतु रिपवोपि हि शस्त्रपूता इत्थं मति र्भवति तेष्वपि तेति साध्वीति॥५१॥

तया क्रान्त इत्यंघ्रिणा सौ दुरात्मा मुखा त्स्वस्वरूपेण निस्सर्त्तु-
मैच्छत्। स निष्क्रांतपूर्वार्ध एवा वतस्थे समाक्रांतपश्चार्धभागो-
महेश्या॥ ५२॥

तयेति इत्येवं पादेन तया आक्रांतो ऽसौ दुरात्मा महिषः मुखा त्स्वरूपेण निस्सर्तुं ऐच्छत् अथ सः निक्रांतः पूर्वार्धो यस्य तादृश एव अवतस्थे ननु पश्चार्धभागः कस्मान्ननिष्क्रान्त इत्याह की० सः महेश्या समाक्रान्तः पश्चार्धभागो यस्य अपरश्चासा वर्धश्चेति पश्चार्धः अपरस्यार्धंपश्च भावो वक्तव्यः अवतस्थ इत्यत्र समवप्रविभ्यः स्थ इत्यात्वम् ॥ ५२ ॥

विनिष्क्रांतपूर्वार्द्ध एवैष देव्या समं मायिसम्राडयुयुत्सांबभूव । जहासांबिका सा थ साकूत मुच्चै रुदीच्या द्भुतं कर्म तस्या त्यपूर्वम् ॥ ५३ ॥

विनिष्क्रान्त इति एष मायिषु सम्राट् महिषः विनिष्क्रांत पूर्वार्ध एव देव्या सह युद्धेच्छु र्बभूव अथ सा अंबिका ऽपि इति तस्याद्भुत मपूर्वं कर्म उदीच्य साकूतं साश्चर्य मुच्चै र्जहास ॥ ५३ ॥

अथो कालदत्तेन खड्गेन भालं करालेन संवृश्च्य तस्या तिभीमम् । ऋणं वृश्चतिस्मा सा कालस्य देवी तदीया न्महासू न्द्रुतं तस्य दत्वा ॥ ५४ ॥

अथोइति अथ सा देवीकालदत्तेन करालेन खड्गेन अतिभीमं तस्य महिषस्य भालं संवृश्च्य छित्वा अस्य खड्गदातुः कालस्य ऋणं वृश्चति स्म अच्छैत्सीत् किंकृत्वा तस्य महिषस्य महत्वाप्राणान् शीघ्रं तस्य कालस्य दत्वा तेन तस्यै खड्गो दत्त स्तयाच तस्मै महिषस्य प्राणा दत्ता इति ऋणच्छेद स्तयाकृतः अन्योपि कस्माच्चि त्सुवर्णादिकं गृहीत्वा कालान्तरे तत्प्रति निधित्वेनान्यद्वस्तु ददाति ॥ ५४ ॥

पपाता स्य भूमिं विधुन्व च्छिर स्त द्यथा वज्रभिन्नं महाशृंग मद्रेः । तत स्तस्युषी तस्य न्त्यत्कबंधे रराज क्षणं सा क्षणाभे व मेघे ॥ ५५ ॥

पपातेति अथ तस्य महिषस्य तत् खड्गच्छिन्नं शिरो भूमिंविधुन्वत् कंपयत् सन् पपात कथं यथा वज्रेण भिन्नमद्रे र्महाशृङ्गं पतति तत्पातानन्तरं

तस्य नृत्यति कबंधेचरणमात्रं तस्थुषो सा देवी मेघेचरणाभा तडिदिव विरेजे तत्कबंधस्य कृष्णवर्णत्वा न्मेघतुल्यता ॥ ५५ ॥

**अथोत्प्लुत्य तस्मा त्समाश्वासय सिंहं द्रुतं सा रुरुहत्स्वप्रसादैक पात्रम् मुदोच्चैः । स चुक्रोश देव्याऽभिषिक्तः कटाक्षै रनुक्रोश पीयूषपूर्णैः ॥ ५६ ॥**

अथेति अथ साचरणं स्थित्वा तस्मात्कबंधात् उत्प्लुत्य ततश्च स्वप्रसादस्यै कपात्रं आधारं तं सिंहं समाश्वास्य हस्तेनेतिशेषः द्रुतं प्रारुहत् ससिंहोपि करुणामृतपूर्णैं कटाक्षैर्देव्या अभिषिक्तः मुदाउच्चै श्चुक्रोश कृपादया नुकंपास्या दनुक्रोशोपी त्यमरः ॥ ५६ ॥

**ततः कंधरारंध्रतो रौधिरीं स स्रवं स्वस्य नीरंध्रधारां कबंधः । पपातावनीकं पवित्रस्तकाष्टेभ चीत्कारमिश्री कृतायात-रावः ॥ ५७ ॥**

ततइति ततो देव्यतारानंतरं सच्छिन्न शिरा स्तस्य महिषस्य कबंधः कंधराया ग्रीवाया रंध्रतच्छिद्रात् रुधिरसंबंधिनीं नीरंध्रा मनवच्छिन्नांधारां स्रवन्सन् पपात भूमाविति शेषः कीरवंधः अवनीकंपेन वित्रस्तायै काष्टे भादिगजास्तेषां चीत्कारै र्मिश्रीकृतः स्वसहायी कृतः आपात रावो येन अतिशयोक्ति रियम् ॥ ५७ ॥

**अथो तस्य हाहेति कृत्वा परासो श्चमूर्न्यस्तशस्त्रा पलायांबभूव जघानाघिनीं रंहसा तां तु सिंहः स सद्यः स्रवत्कोष्णरक्तं पि यासुः ॥ ५८ ॥**

अथोइति अथ तस्य गतासो र्महिषस्य चमूः सेना तत्रैव न्यस्त शस्त्रा सतो हाहेति कृत्वा पलायां बभूव तां तु पलायमानां पापिनीं सेनां स सिंहः वेगेन जघान ननु तादृशी किमर्थं जघानेत्यतआह कीदृशः तच्छरीरे-भ्यः स्रवत् अतएव कोष्णं ईषदुष्णं रक्तं पातु मिच्छुः ॥ ५८ ॥

अथो ये वशिष्टा स्ततो दंदशूका भया दंतकाभस्य नागांतकस्य । पलाय्याथ पातालमुदिश्य हित्वा कुनाकाविलायाविलीना विलेषु ॥ ५९ ॥

अथोइति अथ ततो मरणात् येत्ववशिष्टा दंदशूकाः राक्षसाः तेतु यमतुल्यस्य नागानां गजाना मंतं नाशं करोतीति तस्य सिंहस्य भयात् पलाय्य अथ च पाताल मुदिश्य कुनाकौ भूमिं दिवं च हित्वा इलाया भूम्या विलेष विलीना आसन् यथा नागांतकस्य गरुडस्य भयात् दंदशूकाः सर्पाः पलाय्य पातालं चोदिश्य भूमिविलेषु विलीना भवन्ति तद्वदित्यर्थः दंदशूकस्तु पुल्लिंगो राक्षसे च सरीसृपे इति हैमः नागो मतंगजे सर्पे पुन्नागे नागकेसरे इति च ॥ ५९ ॥

अथो त्तालवेतालभूतादिसंघाः करालानना पाणिराजत्कपालाः ललल्लंवजिव्हानिपीतास्रधारा वहंतो द्वया त्सृक्किणो स्तत्र चेरुः ॥ ६० ॥

अथेति तदनन्तरं उच्चैः कृता स्तालाः करस्फाला यै स्तादृशा वेताला भूताश्च तदादीनां कूष्मांडादीनां संघाः तत्र युद्धभूमौ चेरुः कीदृशाः कराला न्याननानि येषां तथा पाणिषु राजन्तः कपाला येषां तथा ललंतीभि र्लंवजिह्वाभि र्निपीतारुधिरधाराःकर्म स्त्रक्किण्योः ओष्टप्रांतयोर्द्वयात् वहंतः तालः करतलेंगुष्टमध्यमाभ्यां च संमिते गीतकालक्रियामाने करस्फालेद्रुमांतरे इति हैमः प्रांते चोष्टस्य स्त्रक्किणी इत्यमरः ॥ ६० ॥

वभु स्तत्र योधा मृता युद्धमध्ये शरै रोमशीभूतकायाः क्षतांगाः असृक्पूरकल्लोलकांदोलमाना महांतीव काष्टानि पयो धिमध्ये ॥ ६१ ॥

वभूरिति तत्रच युद्धमध्ये मृता वहवो योधाः वभुः कीदृशः शरैः रोमशी भूताः काया येषां अत एव क्षतांगाः तथा असृक्पूररूपैः कल्लोलैःआंदोलमाना इतस्ततः प्रेर्यमाणाः तत्र दृष्टान्तः पाथोधिमध्ये महांतिकाष्टानीव ॥ ६१ ॥

असंख्यातैः शंखै र्भटमुकुटकोर्णोरुमणिभि र्नगाभै र्नागेंद्रैः पतिततुरगैश्चेंदुसदृशैः। परिस्फीते चक्रैः सिकतिलतटे चूर्णितरथै रराजै का लक्ष्मी र्हरि र पि च तत्रा स्युगुदधौ॥ ६२॥

असंख्यातै रिति तत्रास्युगुदधौ एका सा ऽवशिष्टा लक्ष्मीर्हरिः सिंहश्च रराज यथा प्रलयाब्धौ लक्ष्मी र्हरि र्नारायणश्च राजति तद्वदित्यर्थः कीदृशे असंख्यातैः शंखैः कंबुभि रिव शंखैः र्मृतानां भाला स्थिभिः तथा भटानां मुकुटेभ्यः कीर्णैरुरुभिर्मणिभिः तथाशैलाभै र्गजेंद्रैः इन्दुसदृशैः श्वेतैश्च पतितैस्तुरगैः यद्वा इन्दुसदृशै श्चक्रैश्च परिस्फीते अतिवृद्धे युक्ते इत्यर्थः तथाचूर्णीभूतैरथैः सिकतिलंसिकतावत् तलं यत्र उदधिरपि शंखादियुक्तो भवति इति तयोः सादृश्यं शंखः कंबौ नयोषित्रा भालास्थि निधिभिन्नखे इति हैमः॥ ६२॥

इत स्ततो नैकमहासुराणां भ्रमंतिशीर्षाणि वभु र्महांति तितीर्षुभि स्तत्र कृतांतभृत्यैः स्तुंबीफला नीव समावृतानि॥ ६३॥

इतइति तत्र अनेकेषां महता मसुराणां महांतिशीर्षाणि इतस्ततो भ्रमंतिसंतिवभुः कानीव तत्रास्युगुदधौतितीर्षु भिर्यमकिंकरैः समावृतानि तुंबीफलानीव॥ ६३॥

केचि च्छूलमुखाः परे क्षुरमुखाः सूचीमुखाश्चेतरे
चंद्रार्धाकृतिवक्त्रका स्तदितरे केचित् त्रिशूलाननाः।
दिग्धासत्रा अपरे विषै रसुहरै रन्ये तु दंभोलिभा
रेजु स्तत्र तरंत आशुगचया क्रूरा इवाशीविषाः॥ ६४॥

केचिदिति तत्र आशुगानां च यास्तरन्तः संतः क्रूरा आशीविषाः सर्पा इव रेजुः तेषु च केचिद्वाणाः शूलमुखा आसन् परेतु क्षुरमुखाः इतरेच सूची मुखाः तदितरे च चन्द्रार्धाकृति वक्त्रकाः केचिच्चत्रिशूलाननाः अपरेतु प्राणहरै र्विषै र्दिग्धासत्रा लिप्तमुखाः अन्ये तु दभोलिभावज्र तुल्या॥ ६४॥

ववौ मंदं मंदं सुरभि रनिलः स्पर्शसुखदः स्फुठं जज्वाला ग्निः खमपि रहितं पांसुपटलैः प्रसेदु र्दिग्भागा मिहिरहिमगू- मंजुमहसा वभूतां भूतानि प्रममदु रपासौ सुररिपौ ॥ ६५ ॥

एवं युद्धभूमिंवर्णयित्वा जगत्स्वास्थ्य माह ववाविति सुराणां रिपौ महि- षे अपासौ मृते सति सुरभिः स्पर्शसुखदश्च वायु मंदं मंदं ववौ तथा अग्निः स्फुटं विधूमं जज्वाल तथा खमपि पांसूनां पटलैः रहित मासीत् तथा दिग्भा- गाः प्रसेदुः प्रसन्नाजाताः तथा मिहरहिमगूसूर्य्यचन्द्रौ मंजुमहसौ रुचिरतेज- सावभूतां तथाभूतानि जीवाः प्रममदुः मदोहर्षे धातुः ॥ ६५ ॥

इत्थं तद्देवकार्यं त्रिजगदकहरं श्रीमहापूर्वलक्ष्मीः कृत्वा तर्क्यं तरं सा श्रमजलपृषतै र्मौक्तिकाभै र्वरास्या हित्वा तं ग्लानिहेतुं रणधरणि मगा द्भूभृतो भ्रंलिहाग्रे शृंगे निश्चित्य तत्रा जिग मिषु ममरस्तोम मास्तोतुकामम् ॥ ६६ ॥

इत्थमिति सा श्रीमहापूर्वालक्ष्मीः श्रीमहालक्ष्मी रित्यर्थः इत्थं तर्क्यं तरं अतर्क्यं त्रिजगता मकंदुःखंहरतीति तादृशं देवकार्यं महिषवधरूपं कृत्वा कीदृशी मौक्तिकाभैः श्रमजन्यै र्जलविन्दुभि र्वरं सुंदरमास्यं यस्याः सा तां ग्लानिहेतुं रणधरणिं हित्वा अभ्रंलिहमग्रं यस्य तादृशस्य कस्यिद्भूभृतः शैल- स्य शृङ्गे अगात् किं कृत्वा तत्र स्थाने आस्तोतु कामं अमराणां स्तोमं वृन्दं आजगमिषुं निश्चित्य अत्र युद्धभूमौ देवानां स्तोतु मागमिष्यन्ति अतोमया स्थातव्यं ग्लानिहेतुत्वा दिति भावः अभ्रंलिह इति खश् स्तोमौघनिकरव्रा- तवारसंघातसंचयाइत्यमरः ॥ ६६ ॥

श्रीमाञ्शंभो श्चरणसदनीभूतहृ च्छम्भुनाथो
लक्ष्मीनाथं कविपरिवृढं देशकोसूत यं मां ।
तेनो द्गीते महिष निधने गीत लक्ष्मी चरित्रे
लक्ष्मीकाव्ये विरति मगमत्सर्ग एषोष्टमोपि ॥ ७० ॥

श्री मानितत्रादि पूर्ववत् ॥ ६८ ॥

**इतिश्रीलक्ष्मीकाव्ये भगवती मह्विष संवादोनामाष्टमःसर्गः ८**

इति श्री लक्ष्मीकाव्यव्याख्याया मष्टमः सर्गः ॥ ८ ॥

---

ॐनमोभगवत्यै ।तदनु नभसि देवाऽवग्रहे स्मि न्विनष्टे घनकुसुमसुवृष्टिं चक्रिरे सर्वत स्ताम्। जगु रथधृतलास्या मंजुघोषा सुकेशीप्रभृतय श्चरुमोदात्षट्पदीभि स्तदानीम् ॥ १ ॥

ॐनमोविघ्नहर्त्रे निहतं सहसोत्तमांगके तुरगारेः सुरतापकारिणः द्रुहिणेंद्रमुखाभिवादितं चरणांभोज मुपास्महे श्रियः अस्मि न्सर्गे देवस्तुति वर्णयिष्यति तावत्तेषा मागमननिबंधनं निरतिशयानन्दोद्भवमाह तदन्विति तदनन्तरं अस्मिन् अवग्रहवृष्टिकारणीभूतयज्ञध्वंसंकत्वा वृष्टिप्रतिबन्धरूपे महिषे विनष्टे सति नभसि आकाशे स्थितादेवाघनांनिविडां पुष्पाणां सुवृष्टिं सर्वत स्तां भगवतीं चक्रिरे अथ मंजुघोषा सुकेशी प्रभृतयः स्वर्वेश्या धृतंलास्यं नृत्यं याभि स्ताहृश्या षट्पदीभि र्गानाहैंश्छन्दोविशेषैः उरुमोदात् तदानीं जगुः प्रभृति शब्देनाद्यर्थेनरंभामेनकाघृताच्युर्वशी तिलोत्तमादीनां ग्रहनम् अथाप्रस्तुतार्थः तदनु अस्मिन्नवग्रहे वृष्टिविघाते विनष्टे सति देवामेघा नभसि श्रावणेमासि घनकुसुमानां मेघपुष्पाणां जलानामितियावत् सुवृष्टिं सर्वतस्तां पृथ्वीं चक्रिरे अथ तदानीं वर्षाकाले प्रवृत्ते मंजुर्घोषोयस्याः सा कोकिला तत्प्रभृतयः उरुमोदात् षट्पदीभि र्भ्रमरीभिः सह जगुः तथा शोभनाः केशा यस्याः सा मयूरी तत्प्रभृतयश्च धृतनृत्या आसन् तामिति सर्वतो योगीद्वितीया नभोव्योम्नि नभामाघे श्रावणे च पतद्गृहे घ्राणे मृणालसूत्रे च वर्षा सु च नभाः स्मृतमितिविश्वः देवः सुरे घने राज्ञीति च अस्मि न्सर्गे मालिनी वृत्तम् ननमयययुतेयं मालिनी भोगिलोकैरिति लक्षणात् अष्टभिः समभिव्ययतिरित्यर्थः ॥ १ ॥

अथ तरलतराभिः किन्नरै रंगुलीभि र्विरलय मनुतालं ताडिता श्चारुगीतैः। अमृतरसनदीशा रोदसी व्याप्य नेदुः परममधुरमंद्रारावहृद्या मृदङ्गाः ॥ २ ॥

अथेति अथ तत्र अमृतरसरूपेण नदीशा समुद्रेण रोदसी द्यावाभूमी व्याप्य मृदङ्गामुरजानेदुः कीदृशाः तरलतराभि रङ्गुलीभिः कृत्वा चारुभिर्गीतैः

सह तालं तालं प्रति वरलयं यथा स्यात्तथा किन्नरैस्ताडिताः पुनः को० पर-ममधुरायै मंद्रा गभीरा आरावा स्तै र्हृद्याः मनोरमाः तालः कालक्रियामानं लयः साम्य मित्यमरः गीतवाद्यपदादिन्यासानां क्रियाकालयोः साम्यं लयः कालस्य क्रियया आवाप निष्क्रमादिकमानं परिच्छेदनं ताल इत्यर्थः ॥२॥

**इति नभसि समुत्थे चारुतौर्यत्रिकेऽस्मिन्भुवि निखिलतिरश्चां श्रेणयोऽपि श्रवोभिः विगलदितरवेद्यास्तत्पिबंत्यः सुधावत्प्रसृतनिजदृशः खे चित्रलिप्ता इवा सन्॥ ३ ॥**

इतीति इत्येवं नभसि अस्मिन् चारुणि तौर्यत्रिकं श्रवोभिः सुधावत् पिबन्त्यः अतएव विगलत् नष्टो भवत् इतरत् पानाशनादिकं वेद्यं येषां यथा खे एव प्रसृता निजदृशो येषां अरसज्ञानामपि मृगादीनां यत्रेदृशी गति जाता किमु तत्र रसज्ञाना मितरजनानां वाच्य मिति भावः तौर्यत्रिकं नृत्यगीतवाद्यं नाट्य मिदं त्रय मित्यमरः ॥ ३ ॥

**शतमखमुखलेखाः खात्समुत्तीर्य वेगा ज्जयतु जयतु देवी त्युच्चकै र्गायमानाः। सह मुनिहयवक्त्रस्वर्गवेश्यादिवर्गै स्तमचलमथ पादै रंकितं चारु चक्रुः॥ ४ ॥**

शतमखेति अथ इन्द्रादयो देवाःवेगात् खात् समुत्तीर्य मुनिभि र्हयवक्त्रैः किन्नरैः स्वर्गवेश्यादीनां च वर्गैः सह देवी जयतु इत्युच्चै र्गायमानाः तं देव्या-धिष्ठितं अचलं स्वपादैश्चारु यथा भवति तथा अंकितं चक्रुः तत्राजग्मु रित्यर्थः ॥ ४ ॥

**अथ सुरललनानां भूषणैः पूषरुग्भिः कनकितनिखिलांगो देवतै रुच्यमणः खचितशिखरदेशो रत्नजालैः शिवायाः स्फुट मवनिधरो सा वन्वकार्षीत्सुमेरुम्॥ ५ ॥**

अथेति अथैवं सति असाववनिधरः शैलः स्फुटं प्रकटमेव सुमेरुं अन्वकार्षीत् तुलितवान् मेरुतुल्यो भाति स्मेत्यर्थः कुत इत्याह कीदृशः सूर्यसदृशतेजोभिरप्सरसां भूषणैःकनकोभूतानि निखिलान्यङ्गानि यस्य तथा देवतैरुच्य-

माणो ऽधिष्ठितः तथा शिवायाः श्रीमहालक्ष्म्या रत्नजालैः खचितः शिखर देशो यस्य सुमेरुरपि कनकमयः देवानां च निवासस्थानं तस्य शिखरे च रत्नानि सन्ती तुल्यता ॥ ५॥

**अपि कमलदलेभ्यः कोमलौ मातु रंघ्री कठिनमुकुटकूटै र्मा-व्यथा मांह्विषाताम् इति हि तदुपपादं शंकया ते विशंकं युगप दभिपतंतो धित्यकायां विरेजुः ॥ ६ ॥**

अपीति कमलदलेभ्योपि कोमलावस्थामातुरंघ्री अस्माकं कठिनै मुंकुटानां कूटैःशृङ्गै र्व्यथां मा आंह्विषातां न प्राप्नुवतां इतिशंकया ते देवाः तस्याः देव्या उपपादं पादयोः समीप मेव विशंकं यथा स्यात्तथा अधित्यकायां शैलोर्ध्वभूमिकायां युगपत् अभिपतन्तो विरेजुः ॥ ६ ॥

**अधिगततदनुज्ञा स्ते समुत्तिष्ठते ति प्रणयनतशिरोभिः क्षिप्र-मुत्थाय देवाः । अथ सरसपदाभि र्वर्णमालाभि रंबां नुतिभि-रभिनुवंतिस्मोन्मुदो मालिनीभिः ॥७ ॥**

अधिगतेति अथ ते देवाः समुत्तिष्ठत इति अधिगता प्राप्ता तस्याअनुज्ञा येषां तादृशाः सन्तः प्रणयेन नतैः शिरोभिः क्षिप्रमुत्थाय अथ उत्क्रष्टा मुदो येषां ते ता मम्बां नुतिभि रभिनुवन्ति स्म कीदृशीभिः सरसानि यासु ताभि वर्णाना मकारादीन मनुक्रमेण निर्ग्रंथना न्मालाभि रिव मालाभिः क्रत्वा मालिनीभि र्मालावतीभिः अत्र स्तुतीनां स्त्रीरूपतापि व्यज्यते तथाहि रसाः षट्पदा येषां ते भ्रमरै सहिताभिः नाना वर्णमालाभिः क्रत्वा मालावतीभिः यद्वा वर्णाना मकारादीनां माला यस्यां तादृशीभिःसरसपदाभिस्समालिनीभि श्छन्दो विशेषै स्तां स्तुवन्ति स्म वर्णमालाभि रिति बहुत्वं बहुदेवापेक्षया अत्र तु कैव वर्णमालास्ति ॥ ७॥

**अरुणजलजकांतं मंगलं चा तिसौम्यं गुरुसुकविभि रिंद्र-हंसवन्मन्दचारि । प्रणतजनतमोनुद्दे वि चक्रांगकेतुप्रभृतिभि र भिवाद्यं तें घ्रियुग्मं श्रिताः स्म ॥ ८॥**

तावदकारस्यादित्वात्तदादिना स्तुवन्ति अरुणेति हे देवि ते तव अंघ्रियुग्मं वयं श्रिताः कीदृशं अरुणजलजवत् कांतं मनोरमं तथा भक्तानां मशुभनाशकत्वा न्मङ्गलरूपं तथा अतिशयेन सौम्यं सुन्दरं तथा गुरुभि र्महद्भिः सुकविभि रीड्यं स्तुत्यं तथा हंसवन्मन्दं चरितुं शीलमस्य तथा प्रणतानां जनानां तमो नुदति नाशयतीति तत् तथा चक्रांगो हंसः केतौ यस्य सः ब्रह्मा तत्प्रभृतिभि रभिवाद्यं नमस्करणीयं क्रोडीकृतनवग्रहं चेदं पद्यं तथा हि अरुणेत्यनेन सूर्यः जलजेति चन्द्रः मंगलेति भौमः सौम्योबुधः गुरु र्बृहस्पतिः कविः शुक्रः मंदः शनिः तमो राहुः केतुः शिखीति रत्नावल्यलंकारोयम् ॥

**इह हरिहरमुख्यै र्वाङ्मनोगम्यभूमि र्न च कतिविधकीर्त्ति-र्ज्ञायसे कीर्त्यसेव। मुखरयति हि मात र्भक्ति रेषा तवा स्मान्नमय स्खलु न शोभा मेति रोषाः सुतेषु ॥ ९ ॥**

अथ स्तुति र्नामगुणकथनं तच्च गुणज्ञानाधीनं अज्ञातस्य कथनायोग्यत्वात् तथा च निर्गुणसगुणरूपाया भगवत्या गुणाना मभावादानंत्याच्च ज्ञातु मशक्यत्वंकथं तत्कथनरूपा स्तुति रनुरूपा भवेदित्याशंक्य तदपनोदनव्याजेन स्वस्यानौद्धत्यं दर्शयन्तो भगवती पादश्रवणानन्तरं शक्तिशक्तिमतोरभेदंपश्यन्तो ब्रह्मरूपेण तांस्तोतु मारभंते इहेति हे मातः इह जगति हरिहरमुख्यै रपीश्वरै स्त्वं न ज्ञायसे न ज्ञान विषयो भवसि तथा कीर्त्यसेन अज्ञेयत्वे अकीर्त्तनीयत्वे च हेतु द्वयं क्रमेणाहुः को० त्वं वाङ्मनसो रगम्य भूमिः अगमस्थानं निर्धर्मकत्वात् अतोगेयत्वा संभवः यतो वाचो निवर्त्तंते अप्राप्य मनसा सहेति श्रुतेः तथा कतिविधाः अनेकप्रकाराः कीर्त्तयो जगत्सृष्ट्यादिभक्तानुग्रहदुर्जननिग्रहादिरूपा यस्याः सा अतः कीर्तनीयत्वा संभवः गुणामानंत्यादित्यर्थः तर्हि भवद्भिः कथं कीर्त्याविष्करण रूपा स्तुतिरारभ्यते इत्याहु हे मातः अस्मांस्तु एषा तव भक्तिरेव मुखरयति बलात्कारेण बाचालो करोति अतो नास्मासु कश्चि न्ममत्वदोषोस्तीत्यर्थः अथोचेत्तथापि क्षमय यतः सुतेषु रोषो मातु रिति शेषः शोभां नैति न प्राप्नोति कुपुत्राजायन्ते क्वचिदपि कुमाता न भवतीत्युक्ति प्रसिद्धेः ॥ ९ ॥

**उरुतरवरकीर्त्तिं लब्धुमंतं तदा मी दशशतकरचक्षुर्मौलयो-**
**ना त्व मासन् त्वयि तु विनयभावाल्लेभिरे त्वत्पदाज्ञा द्युतिल**
**व मपि वज्रं शीर्षधार्य्यां च धूलिम् ॥ १० ॥**

अथ कीर्तेरानन्त्यं प्रतिपादयितु मन्वयव्यतिरेकाभ्यां कारणतां च द्रढयितुं भगवत्यनुवृत्ति व्यतिरेकेण फलव्यतिरेकमाहुः उरुतरेति उरुतरा अनंता वराश्रेयः साधनीभूता च कीर्त्तिर्यस्यास्तस्य बुद्धौ हे उरुतरवरकीर्त्त भगवति अमोदशशतकरचक्षु मौलयः दशशत सहस्रसंख्याकाः कराः किरणा यस्य स सूर्य्यः तन्मितानि चक्षुंषि यस्य सः इन्द्रः तन्मिता मौलयो यस्य सः शेषः एते पिमहाप्रभावाः तव सगुणाया गुणाना मंतं लब्धुमियत्तया ऽवधारितुं अलं समर्था न आसन् अयं भावः सूर्य्येणत्वभिमतं जनोहाभ्यामपिकराभ्यां दूरस्थित मप्यर्थं गृह्णाति अहं तु सहस्रकरोऽस्मतो भगवत्या अंतं किं न लप्स्यामि तथेंद्रेण त्वभिमतं मम सहस्रं चक्षूंषि संति अत स्तदंतं किं न द्रक्ष्यामि तथा शेषेणाभिमतं मम सहस्रमिता मौलयः संति प्रतिमौलि च द्वे द्वे जिह्वे अत स्तस्या गुणकीर्त्तनेको ममात्यायासोऽस्तीत्यभिमानेन किमपि तदंतं न प्रापुः त्वदनुवृत्तिं विना प्रसिद्धप्रभावानामपि सूर्येंद्रशेषाणां दुर्विज्ञेयत्वेका वार्त्ता न्येषा मिति व्यतिरेक मुक्ता ऽन्वयमाहुः अस्याभिमानेन तदंतमलब्ध्वा त्वा मनुवर्त्तमाना स्त एव सूर्येन्द्रशेषा स्त्वयि विषये विनयभावात् स्वौद्धत्यपरित्यागात् आद्यः सूर्य्यः त्वत्पदाज्ञात् तदवस्थिताया द्युतेः प्रभाया लवं लेशं लेभे येन जगदंतर्वर्त्ति निखिल ध्वान्तध्वंसं करोति अन्य इन्द्रः त्वत्पदाजस्थितवज्रचिह्नात् वज्रं लेभे येन वृत्रप्रभृतीन् दैत्यान् नाशयति अपरः शेषस्तु त्वत्पादाजलग्ना या धूलि स्तां लेभे यामयाविधिशिरसा वहति अतः पूर्वं बालिशतया निवृत्तावपि पश्चात्तवानुवृत्तेः फलं स्फुटमेवात्र दृष्ट मित्यन्वयउक्तः ॥ १० ॥

**ऋत मसि तमस स्त्वं सर्वथा स्मा त्वरस्ता त्तव लव मनवाप्य-**
**स्या त्म इशो प्य नीशः । स्फुटतर मिति दृष्टं सत्पुराप्यच्युताया**
**द्या न वय ममु मनु त्वां हन्तु मीशा अभूम ॥ ११ ॥**

इदानीं ब्रह्मणा सह तादात्म्यं प्रतिपादयितुं भगवत्याः सदादिरूपता-माहुः ऋतामिति हे मातः त्वं ऋतं सत्यमसि सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतेः तथा ऽस्मात् तमसो ऽज्ञानात् सर्वथापि परस्तादसि प्रकाशात्मकत्वात् एवं तादात्म्यं प्रतिपाद्य भगवत्या आधिक्य द्योतनाय ततः किंचिद्विशेषमाहुः एवं तादात्म्ये सत्यपि हे मातः स ईशः कर्त्तु मकर्त्तु मन्यथा कर्त्तु शक्तोपि परमानंद समुल्लास निर्भरः परमात्मात बलं सिसृक्षा रूपलेशं अनवाप्य अप्राप्य सृष्ट्या दा वनीशः स्यात् युवयो रैक्ये सत्यपि एता वान्विशेषोस्ति स ईश्वरस्त्वां विना न किंचित्कर्त्तुं शक्तः त्वं तु तं विनापि शक्तासि शक्तित्वात् अत्रैव प्रत्यक्षप्रमाणमाहुः हे ईशि इतीदं तु तवाधिक्यं स्फुटतरं प्रत्यक्षमेवेदानी मस्माभिर्दृष्टं यस्मात्पुरामहिषयुद्धे अच्युताया अपि वयं अनुतां तूष्णीकाः सन्तः अमुं महिषं हंतुं ईशान अभूम तं तुच्युताद्यै रहिना पर मुमनाया-सेनैव हतवतीत्यतस्त्वं वाधिक्य मिति ध्वनिः नच्यवति स्वरूपादित्यच्युत शब्देनात्रपरमात्मैवलक्ष्यते एतदुक्तं सकलजननी स्तवे कणा स्वदीयीनां रविशशिकृशाणुप्रभृतयः परंब्रह्म क्षुद्रं तव नियत मानन्द कणिकेति हीनि चोत्ये ऽनुप्राम्बादिति स्वामिति द्वितीया अत्रा ऽकारादीनां संध्यक्षराणां चा नुपादानंच्छन्दोनुरोधेन मालिन्यां हि तावत् षट् लघवः सन्ति ॥ ११ ॥

**कतिचि दमरवंद्ये व्याहरंती ति विद्यां सदसदिति तथा न्ये-केप्य स त्वा सदन्ये अपर इह हि विश्वं विश्वमात र्जगु स्त्वां-वय मिह करुणाब्धिं मन्महे त्वा मतर्क्याम्॥ १२ ॥**

अथ सर्वेषां मतमनूद्य स्वभक्तिमतं मुख्यं प्रतिपादयन्तः स्तुवन्ति कति-चिदिति हे अमरै र्देवै र्वंद्ये यद्वा अमरेण परमात्मनापि वंद्ये अखिलवंद्ये इति वा पाठः कतिचित् स्वसंप्रदायानुरोधिन स्त्वद्रहस्यज्ञाः त्वांविद्यां चैतन्य-रूपा मिति व्याहरंति अथैवं चैतन्यरूपत्वे सिद्धे अपरेएत न्मताविरोधिनोऽ ईतविदः हे विश्वमात स्त्वांविश्वं सकलजगद्रूपांजगुः सर्वमिदं यदयामत्मो आत्मैवेदं ब्रह्मैवेदं सर्व पुरुषएवेदं विश्वं संवखल्विदं ब्रह्मेत्यादिश्रुतिभिः अथै-व विश्वरूपत्वे सिद्धे त्वां विश्वरूपां अन्ये सांख्य मतानुसारिणः सदिति जन्मनि

धनरहितां जगुः नह्यसत उत्पत्तिः संभवति नवा सतोविनाशइत्युत्पत्ति विना शशब्दाभ्या माविर्भावतिरोभाव मात्रमभिलिप्यते तेन सदेवसर्व मित्याहुः अथ केपि सुगतमतानुसारिणः असत् क्षणिकमिति वदंति नहि सतः स्थिरत्व संभवति अर्थक्रियाकारित्व मेवहि सत्वं तच्च समर्थस्य क्षयायोगेनाविलंबेन उपपद्यते इतरेकस्मिन्नेव क्षणे सर्वार्थक्रियादिसमाप्ते रुत्तरक्षणे ऽसत्वमेव तथा चेश्वरस्यापि क्षणिकविज्ञानसंतानरूपत्वादसावसत उत्पत्तेरोष्टेन तु सतः स्थि· रत्वायेत्यसदेवाहुः अथ तदुभयपक्षासहिष्णवो ऽन्ये तार्किकाः सदसदित्युभय रूपतां वदंति आकाशकालदिगात्ममनः पृथिव्यादिपरमाणवो नित्याः कार्य द्रव्याणिचानित्यानि तेनसदसदिदमित्याहुः इतिपक्षत्रयमनूद्यतन्निरासायस्वम तमाहुः वयं तु तुच्छत्वन्यमतानभिज्ञाः त्वां करुणाया अब्धिरूपामेव मन्महे कौ ट्टर्यों त्वा अतर्क्यातर्क्यविषयां त्रिष्वप्येतेषु पक्षेष्वद्वैतांगीकारादद्वितीयसम्मात्ररू पाया स्तत्र स्पर्शोऽपि नास्त्यतो मिथस्तर्कै र्व्याहतत्वादेतन्मतानुसारिण स्तत्त्वम लभमानाः प्रत्युतक्लिश्यंते भक्तिपक्षस्य तु केनापि हंतु मशक्यत्वा न्मु,ख्यत अतः परमपदप्राप्तये भक्तिरेव ग्राह्या नतु मिथो विरुद्धानेकशास्त्रगर्त्तेषु पतन यमिति भवः अत्र देव्यां परकविमतिविकासोत्प्रेक्षितविद्यात्वादिधर्मनिन्हवस्य करुणाब्धित्वारोपार्थं निरूपणात् शुद्धापन्हुति रलंकारः अपन्हवस्तुपरपक्षत्वोप न्यासादर्थसिद्धः ॥ १२ ॥

**त्वमय मिद मशेषं प्रागभू न्निर्विकल्पं तदनु तव कलायाः।**
**कल्पितानेकजल्पम् अपृथगिति भवत्या स्तद्गृणंति प्रवीणा न-**
**हि खलु वलयादौ न्कांचनार्थी जहाति ॥ १३ ॥**

एव मेतानि मतानि निरस्य संप्रति स्वाभिमतां तस्या विश्वरूपतां नि- रूपयन्ति त्वमय मिति हे भगवति इदम शेषं नाम रूपात्मकं जगत् प्राक् सृष्ट्यादौ निर्विकल्पं नाम जात्यादि विकल्प रहित मासीत् अत एव त्वमयं शून्यप्रायं शुद्धसंविद्रूपं ब्रह्ममयं वासीत् सदेव सौम्येद मग्रआसीत् एक मेवा- द्वितीयं ऐतदात्म्य मिदं सर्वमित्यादि श्रुतेः तदनुसृष्ट्यारंभेच्छायां तव कला-

या अंशरूपायामायाया: इदमेव निर्विकल्पं कल्पितो ऽनेकविधोजल्पो नाम जातयादि यस्मिन् याद्दश मासोत् तत्तस्मात् प्रवोणा: प्रेचावन्त: इति जगत् भवतया अपृथक्त्व रूपमेव गृणन्ति अद्वितीयत्व प्रतिपादनाय दृष्टान्त माहु: हि यत: कांचनार्थी जन: वलयादीन् न जहाति अथ सत्यपि नामादिविकारिवलयकुंडलकेयूरादिकं वस्तुत: स्वर्णमेव तथा नामाद्युपाधित्यागेनेदं विश्व तद्रूपमेवेतयर्थ: यथाच्छांन्दोग षष्ट प्रपाठके सौम्यै केन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारं भणं विकारो नामधेयं मृत्तिकेत्येव सत्य मिति खंख: संविदि व्योमनींद्रये शून्ये विन्दौ मुखे खस्तु सूर्ये इति हैम: ॥ १३ ॥

**गगन मनिलवन्हो जीवनं मेदिनो च विकृति मपि महांतं संसृजंतीं गुणेभ्य: जलजदल मिवा द्भि निर्विलेपं पुमांसं भगवति रमयंतीं त्वां हि मूलं गृणन्ति ॥ १४ ॥**

संप्रतिजगज्जननकारणतां दृढयितुं मूलप्रकृतिरूपत्वं तस्या: सांख्यमतेनदर्शयन्त: स्तुवन्ति गगनमिति हे भगवति त्वामेव चिच्छक्तिं सांख्य विद: मूलं विश्वस्य कार्यसंघातस्य मूलत्वा न्मूलप्रकृतिं गृणन्ति नत्वस्या मूलांतरमस्ति अनवस्थाप्रसंगात् कीदृशींत्वा अद्भिर्जलैर्जलजदलमिव निर्विलेपं नि:संगमपि पुमांसं पुरुषं रमयन्तीं रमणक्रियायां प्रयोजकव्यापारेण प्रेरयन्तीं एवं च सति तावत् स्वस्वरूपेभ्यो गुणेभ्य: सत्त्वरजस्तमोभ्य: महांतं महत्तत्त्वं संसृजन्तीं अपिशब्दे नाहं कारं ततश्च विकृतिं दशेंद्रियाणि पंचतन्मात्राणि चेतिषोडशसंख्याकं विकारंसृजन्तीं ततश्च पंचतन्मात्रेभ्य: गगनादीनि पंच महाभूतानि सृजन्तीं तत्रशब्दतन्मात्रादाकाशं शब्दगुणं शब्दस्य तन्मात्रसहितात् स्पर्शतन्मात्राद्वायु: शब्दस्पर्शगुण: शब्दस्पर्शरूपरसतन्मात्रसहिता द्रूपतन्मात्रात्तेज: शब्दस्पर्शरूपगुणं शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादाप: शब्दस्पर्शरूपरसगुणा: शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्रा त्पृथ्वीशब्दस्पर्शरूपरसगन्धगुणा जायते इति सर्गक्रमात् व्युत्क्रमेणश्लोकव्याख्या कृता तदुक्तं सांख्ये प्रकृते र्महांस्ततोहंकार स्तस्माद्गणश्च षोडशक: तस्मादपि षोडशकात्पञ्चभ्य: पंचभूतानोति ॥ १४ ॥

घृणय इव दिनेशे वह्निषीव स्फुलिंगा स्ततय इव पयोधौ लो! लकल्लोलकानाम् । समुदय मधिगत्यानेकवारं जगंतित्वयि धृत नटलीले लीलया यान्ति शान्तिम् ॥ १५ ॥

इतग्ध्यारोपमुक्त्वा सांप्रतमपवादं स दृष्टान्त माहु: घृणय इति हे धृत-नटलीले भगवति अमूनि जगन्ति इत्थं त्वत्तएव समुदय मुत्पत्तिं अनेकवार मधिगतग तुभ्यं वलीलयाशान्ति उपरमंयान्ति तुभ्यं वलीनानिभवंतीतर्थ: अत्र दृष्टान्तमाहु: कस्मिन्कइव दिनेशेसूर्यैघृणय: किरणाइव तथा वह्निषि अग्नौ-स्फुलिंगा अग्निकणा इव तथा लोलानां कल्लोलकानां महोर्मीणां ततय: पयोधाविव प्रतरचो यमपवाद स्सचक्रम: सर्यते जगत्प्रतिष्टादेवर्षे पृथिव्य प्सुप्रलीयते ज्योतिषाप: प्रलीलन्ते ज्योति वायौ। प्रलीयते वायु: प्रलीयते व्योम्नितचाव्यक्ते प्रलोयते अवरक्तं पुरुषे ब्रह्मन्निष्फले सुप्रलीयत इति ॥ १५

चकितहरिणनेत्रे त्वं मना गेव नेत्रे सदय मलिकनेत्रे मन्मथच्चे चजैत्रे । वितरसि यदि सद्यो विष्णुजिष्णादिवंद्यो भवति स भवकर्त्ता देवि भर्त्ता च हर्त्ता ॥ १६ ॥

इत्येवं जगज्जननादिकारणतु प्रतिपाद्य भक्तिपचं स्वीकृतग भगवतग करुणा रसोद्रेकं दर्शयंति चकितेति चकित स्त्रस्तो यो हरिण स्तद्दतिचंच ले नेत्रे यस्या स्तत्संवुद्धौ तथा हे भगवति यदितु अलिके ललाटे नेत्रं यस्य तस्मिन् शिवे सदयं यथासग्रात्तथा स्वकीये नेत्रे मनाक् ईषदपि वितरसि प्रेरय सि को ० शिवे मन्मथस्य चेत्रं शरीरंजेतुं शीलमस्य तादृशे तदैव स शिव:-सद्य: विष्णुशक्रादिभिर्वंद्यो भवति न केवलमोदृक्प्रभाव एव जायते किंतु भव स्य संसारस्य कर्ता तथा भर्ता पालयता हर्ता च प्रभवति ईदृक् प्रभावस्तव करुणा कटाक्षोस्ति ईश्वरोपि यं स्वल्पमपिप्राप्यैव सृष्ट्यादौ शक्तो भवति तर्हि का वार्ता ऽन्येषा मिति भाव: चेत्रं शरीरे केदारे सिद्धस्थानेकलत्रयोरि तविश्व: ॥ १६ ॥

**कलयसि कुल मुच्चै र्विश्वयोनिं तनोषि शिवयसि शिव मीशि त्वं विभुं संविभर्षि कलयसि किल कालं भासय स्युषाभास्करु पपि नगकन्ये मन्महे त्वां गुरूणां ॥ १७ ॥**

भगवत्या: प्रभावातिशयं दर्शयंति कलयन्नसोति हे ईशि यमाश्रित्य कुलिनो लोकं कलयंति तं कुलमपि उच्चै स्त्वं कलयसि तथा निखिल विश्वस्य योनिं कारणमपि ब्रह्माणं तनोषि उत्पादयसि तथा सकलविश्व शिव प्रदातारमपि शर्वं शिवयसि तथा निखिलभुवनभर्तारमपि विभुं विष्णुं सम्यक् विभर्षि पालयसि अथ सकलनैकशीलमपिकालं कलयसि किं च निखिलार्थभासकमपि उष्णभासं पूर्यं भासयसि हे नगकन्ये पार्वति तद्वत् त्वां गुरूणामपि गुरुं वयं मन्महे तेषा मप्याराध्यत्वात्यद्वा एतेषां कुलादीनां गुरूणां महतामपित्वां गुरुं महतीं मन्महे सर्वेभ्योपरतरा तृत्कृष्टा त्वमेवा सोत्यर्थ: ॥ १७ ॥

**जयति तव च पूज्ये मंजुलं पादकंजं जनवृजिनरुजो यद्रेणुचूर्णं कृणोति जलजजनुरजादीन् भक्तिनम्रा न्यदीय समुपदिशति गुंज न्मंजुमंजीरभृंग: ॥ १८ ॥**

अथ भगवति पादांबुजमहात्म्यं वर्णयंति जयतीति हे पूज्ये मंजुलं तव तत् पादकं जंजयति सर्वोत्कर्षेण वर्त्तते तत्किं यस्यपादकं जस्यरेणु: पराग: स एव चूर्णं तल्ललाटेषु लग्नं सत् जनानां स्वभक्तानां वृजिनान्यनेक जन्मार्जितानि पापान्येवरुजोरोगा स्तान् कृणोति नाशयति, अन्यच्चूर्णं चिरंभक्षणेन रोगं न नाशयति इदंतु वहिलग्नमपि सद्योनेकरोगान्नाशयतीत्याधिक्यमपि ध्वनितम् एवं सर्वजनानां तत् फलाफलमुक्त्वा महता मपराहु: परोय: यत्पादकंजं मंजु: सुंदरो मंजीरो नूपर एव मुखरतयाभृंगा स: जलजात् जनु यस्य सब्रह्माअजो विष्णुस्तदादीनपोश्वरान् भक्तान्नम्रान्वीच्य गुंजन समुपदिशतीवेत्युत्प्रेचायद्वा समुपदिशतीति पाठ: तत्र शंकल्याण मित्यर्थ। य त्तवपादकंजंनत्वैव ब्रह्मादयोपि कल्याणं लभंते तत्र कान्येषां वार्त्तेति भाव: अजो हरौ हरे च्छागे इतिहैम: ॥ १८ ॥

**झटिति कपटवाटीजुष्टमोहावटेनो वटुतट मभि मग्ना न्दृष्टि दाम्नो हर त्वं त्वदपर इह को वा हंति यो मद्विपत्तिं मद्दिषव धत एत त्सर्व मेवा नुमेयम् ॥ १९ ॥**

स्वमोहनाशाय तां प्रार्थयंति-झटितीति। हे भगवति कपटरूपाभि र्वाटी भिर्जुष्टे सेविते मोहरूपे ऽवटे महागर्त्ते वटुतटं कंठाग्रभाग मभिव्याप्यमग्ना नन: अस्मान् त्वं करुणा रसार्द्रदृष्टि रूपेण दाम्ना रज्वा झटिति शीघ्रं उद्ध रनतु- मोहनाशक तया प्रसिद्धा विष्णवादयोपि संति तान्विहाय कस्मान् मे प्रा र्थना क्रियतइतत्रतत्राहु: हे जननी त्वत्तो ऽपर: इह कोवर्तते योऽस्माकं विपत्ति हंति ननु किमत्र प्रमाण मितत्रतत्राहु: एतत्सर्वमपि विपत्तिनाश परमानंद दानादिकं मद्दिषस्य वधत एव दृष्टांतादनुमातुं योग्यं यथा सकल विश्वस्ये प्रदाता मद्दिषस्त्वयैवहत स्तथा महामोहस्यापि हननंत्वयैवकार्यं नान्येनेतिसं भावनीयमिति भाव: अवटु र्घाटा ककाटिके तत्रमर: ॥ १९ ॥

**ज्ञपितृभि रिति नैके र्निर्मितं किं तु नां कि हिमगिरिशकले। वा किं तु जाड्यापहारि।तव वपु रिति तर्कै श्चिंतयंतो हि- मात र्निदधत इह पादं मूर्द्ध्नि तै: सत्कवीनाम्॥२०॥**

इदानीं भगवतो शुद्धध्यान फलो द्रेकमाहु: तत्र चकारादि शब्दस्या प्रसि द्धत्वात्तं जकार मिश्रितत्वेमव रचयंति ज्ञपितृभिरिति हे मात: शुद्ध सत्वोपे तत्वादग्रदं तव वपु: इतितर्कैर विगदहृष्टंताधिक्य प्रति पादकै रूहै श्चिंतयंतो ध्यान विषयी कुर्वंतो भक्ता: सत्कवीनामपि मूर्ध्नि पादं निधत्त स्थापयंति म हाकवयो भवंतीत्यर्थ: इतिकै स्तर्कैरित्यतत्राहु: इतीदं भगवत्या वपु: किं अने कै र्ज्ञ स्य बुधस्य पितृभि श्चंद्रै र्निर्मितं किंतु अंकि कलंकसहितं ना स्त यदि चंद्रै र्निर्मितंस्या त्तर्हि कलंकि स्यातद स्तथा बिंधं नास्तीत्यर्थ: अथ पक्षांतरे मभू तादृशं परं तु हिमगिरे: शमले र्निर्मितं स्यात् किंतु इदं वपु र्ध्यायतां जा ड्यं मौर्ख्यं मपहरतीति तच्छीर्मास्तु हिमाचलस्तु प्रत्युतजाड्यं शैत्यं करोति तस्यत स्तथाविधमपि नास्ति किं त्वा भ्यां विलक्षणमेव किमपि निरतिशयने

मल्योपेत मस्तीतरार्थः अत्रोपमेयस्य भगवति वपुषो ऽनेकचंद्रहिमगिरिशकला भ्या मुपमानाभ्यां निष्कलंकत्वा ज्जाड्यापहारित्वधर्माभ्या माधिक्य-वर्णना द्व्यतिरेकः सात्विकध्यानस्यत्वातस्य कवित्व रूपं फलमुक्तं श्रीशंकराचार्यैः शर-ज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमुकुटांवरत्रासत्राणस्फटिकगुटिकापुस्तकधरां सकृन्नत्वानत्वा कथमपि सतां संति दधते मधुक्षीर द्राक्षा मधुरिमधुरीणा भणितय इति ॥ २० ॥

टुणुटुणुटुणुरावै र्नर्त्तनोत्थे श्च भावै स्त्वयि सममरीणां वाद-यंत्यां स्त्वीणाम् । भजति हि जडजातं चेतनत्वं तदानीं सचि दपि च जडत्वं देवि चित्रं तदेतत् ॥ २१ ॥

एवं सच्चिदानंदात्मकत्वेन सकलविश्वरूपेण च स्तुत्वा विशेषा न्महासर-स्वत्यादिरूपेणस्तुवन्ति तत्र टठढाणामेकेन पद्येन रचनामाहुः टुणेति हे देवि सरस्वतीरूपे अमरीणां देवस्त्रीणां नर्त्तना दुत्थितैः टुणु टुणुइति मंजीर रावैः तथा तासां तदुत्थितै र्भावै र्भुजाक्षेपादिचेष्टाभिः सह त्वयि स्त्रीणां वादयं त्यां सत्यां तदानीं परमरसोद्रेकात् जडजातं अचेतनं पाषाणादिकं चेतनस्य चलनादिकं भजति अथ सचित् सचेतनं स्त्रीपुरुषादिकं जडस्य धर्मं निश्चेष्ट-त्वादिकं भजति तदे तन्महच्चित्र मस्ति अचेतनसचेतनयो र्मिथो धर्मविनि-मयात् ॥ २१ ॥

डयत इह हि वीनां खं यथाशक्ति पंक्ति र्निजभुजबलतुल्यं नीर नाथं तरन्ति । निजमतिपरिणामं वक्ति तद्व द्भवंतीं नुनुविषु रि ह सर्वः कोपिनै ति त्वदंतम् ॥ २२ ॥

स्तुत्यविषयतां दृष्टांतेन दर्शयंत स्वप्रवृत्तौ स्वनिर्दोषतां दर्शयन्ति डयत-इति हे भगवति इह हि वीनां पक्षिणां पंक्तिः खं प्रति यथा शक्ति स्वशक्ति मनतिक्रम्यैव डयते नतु तदन्तं प्राप्नोति तथा तितीर्षवो निज भुजबलतुल्यमेव नीरनाथं समुद्रं तरन्ति नतु तत्पारं लभंते एवं दृष्टान्त मुक्त्वा दार्ष्टान्तिके यो-जयन्ति हे भगवति तद्वदिह सर्वोपि नुनुविषुः स्तोतु कामो जननि जमति

परिणामं यावत् स्वबुद्ध्या विषयी क्वतं तावदेव भवन्तीं लक्षणया त्वद्गुणा नि-त्यर्थः वक्ति त्वदन्त' त्वद्गुणानां पारन्तु कोपि जनो ब्रह्मापि वा न प्राप्नोति त्वयि विषये सर्वज्ञानामपि ब्रह्मादीनां स्तुते रननुरूपत्वादस्माक मल्पज्ञानां स्तुते रनुनुरूपत्व' नोपाल' भनीयं अननुरूपत्वस्योभयत्रापि तुल्यत्वात् किं तु नभः पतन्त्यात्म समं पतत्रिण इत्याद्युक्तन्यायेन स्वस्वबुद्ध्यनुसारेण स्तुवतां न कश्चिद्दोषोस्ति प्रत्युतयोग्यमेवेतिभावः डयतइति डीङ् विहाय सा गतौ यातु नगौ को वाजिविकिर विविष्करपतत्रय इत्यमरः ॥ २२ ॥

तव तनुम्रदुताया मालती यं पुरस्ता द्भजति खलुद्दषत्त्वं साम्प्रतं लोक मातः तव हि युधितु तन्वाद्दष्टमीद्दग्दृढत्व' द्दषदपि हि यदग्रे मालतीत्व' बभार ॥२३ ॥

तवेति हे लोकमातः तव तनो र्म्रदुतायाः कोमलत्वस्य पुरस्ता दग्र' इयं मालत्यपि सांप्रत मधुना द्दषत्त्वं शिलाया धर्मं काठिन्य रूपं भजति अयं भावः अधुना तु तव शरीरस्य कोमल त्वमीद्दशं भाति यदग्रे महाकोमला-पि मालती शिला वत्कठिना भाति किमन्य त्तव कोमलात्वतिशयं ब्रूमः अ-थवा यस्या एवातिकोमलाया स्तव तन्वाः शरीरस्य युधि युद्धसमये तु ईद्दश द्दढत्व' काठिन्य' अस्माभि र्द्दष्ट' यस्य काठिन्यस्याग्रे द्दषदपि अति कठिना शिलापि मालती वदती कोमला भाति स्म परं किं काठिन्यातिशयं तव वपु-षो ब्रूम इति भावः अतिकाठिन्यं त्वत्र नाना विधातितीक्ष्णशस्त्रास्त्रै रक्षतत्वा दश्रांतत्वाच्च बोध्यम् तदुक्तं मार्कंडेये चित्ते क्रपा समरनिष्ठुरता च द्दष्टा त्वय्येव देवि वरदे भुवनत्रयेपीति अत्रैकस्मिन्वपुषि विरुद्धयो र्म्रदुत्वकाठिन्य यो र्निरूपणा दाधेय पर्यायालंकारः तयो रग्रेमालती द्दषदोरपि द्दषत्वमाल-तो त्व धर्मोपहितत्व वर्णनादतिशयोक्तिः अनयोश्चात्र संसृष्टिः ॥ २३ ॥

स्थविर विरचनेश त्यक्तदंभोसि शंभो दिनकर तिमिरारे दैत्य जिष्णो च विष्णो। रचय परिह रेदंभासय त्राहि सर्वं सदय मि ति तवोक्ती राजते मात रेषु ॥ २४ ॥

अथ यकारादेरप्रसिद्धत्वा लकारा संपूर्णत्वेन तदादिं रचयंति स्थविरेति हे मातः एषु ब्रह्मादिषु कार्येषु प्रयोजितत्वादितीयं सदयं तव क्रमादुक्तिः राजते इति का हे स्थविर ब्रह्मन् यत स्त्वं विरचने ईशः समर्थोसि अतः इदं सर्वं जगत् रचय इति ब्रह्माण मुक्त्वा पुनः शंभु मभिमुखीकृत्य गदसि हे शंभो यत स्त्वं तत्क्षदंभोसि अत इदं परिहर प्रलये स्वस्मिन् लीनं कुर्वित्यर्थः सदंभोसि चौरवत्परिहरन् पुन र्न सृजति त्वं तु तत्क्ष दंभत्त्वात् परिहृत्वापीदं पुनः सृष्ट्यादौ सृजस्यतस्त स्त्वमेवास्मिन् कर्मणि योग्योसीति भावः इति शिव मुक्त्वा सूर्यं गदसि हे दिनकर त्वं तिमिरस्य अरि र्ध्वंसकोस्यत इदं भासय अथ हे विष्णो त्वं दैत्यानां जिष्णुर्जयनशीलो ऽस्यत इदं त्राहि रक्ष दैत्या हि लोकबाधां कुर्वंति तान् नानावतारै र्निहत्य त्वमेव विश्वपालने योग्योसीति भावः प्रभुर्हि यथायोग्यमेव तत्तत्कर्मणि स्वभृत्यान्यो जयति अने-नैव च तत्कृपापि भृत्येषु सूचिता भवती त्यतो भगवत्याः सर्वेषां प्रभुत्वं द-र्शितं अत्रैकैकया रचनादिक्रियया एकैकस्य स्थविरादिपदस्य समन्वया यथा-संख्यालंकारः अमुमेव क्रमिकालंकारं केचिद्वदन्ति ॥ २४ ॥



द्युसरि दसि पुनाना मोहवृक्षं धुनाना हरसि निजजनानां-पापतापां श्च नाना । सुचिदमृतनदीनं ज्ञानरत्नं न दीनं पिहि-तविकृतिमीनं देवि या स्वात्मनीनम् ॥ २५ ॥

द्युसरदिति हे देवि त्वं पुनाना त्रिलोकी पवित्री कुर्वाणा द्यु सरित् गंगा रूपासि कीदृशी मोहो ऽज्ञानं तदेवावरकत्वात् वृक्षस्तं धुनाना कंपयन्ति नदीं हि तीरस्थं तरुं कंपयति तथा त्वं निजजनानां स्वभक्तानां कायिकमानसि कादिभेदेन नानाविधान् पापान् तथा अध्यात्मकादिभेदेन नानाविधान् तापान् हरसिगंगापीदृशो भाति अथात्वं सुष्टु शोभनंचिदमृदात्मकं नदीनामिनंस्वामिनं समुद्रं सच्चिदानन्दात्मक ममृतसमुद्ररूपं परं ब्रह्मणापि तच्छक्तित्वेन प्राप्नोषि तस्य समुद्ररूपतां दर्शयन्ति कीदृशं ज्ञानरूपं रत्नंयस्मिन् अतएव दीनं क्षुद्रं न किंतु परिपूर्ण मित्यर्थः तथा पिहिता अन्त स्तिरोहिता विकृतयः षोडश उप-

लक्षण मेतत् तेन प्रकृतेरपि ग्रहणं तद्रूपा मीना यस्मिन् अन्ते हि भगवान्म-
त्स्यादिकं स प्रकृतिक मन्तर्निवेश्य शेते तथा आत्मने स्वस्मै उचितं आत्मनीम
आत्मन्विश्वजन भोगोत्तरपदात् खः ॥ २५ ॥

धरणिधरतनूजे देवतानां पितॄणां क्रतुषु च पितृदाने त्वं हि
सौहित्यहेतुः। इति भगवति नोचेत्त्वा मुदस्या पितानां सा,
रपि फलभुजः स्वाहस्वधारूपिणीं ते॥ २६॥

धरणिधरेति हे धरणिधरस्य हिमालयस्य तनूजे पार्वति क्रतुषु अश्व-
मेधादिषु देवतानां पितृदाने श्राद्धादौच पितृणां सौहित्यस्य तृप्ते हेतु स्वयमे-
वासि अमु मेवागमसिद्धमर्थं व्यतिरेकेण द्रढयन्ति हे भगवति इति चेत् न
स्यात् यदि त्वं हेतु र्न स्या इत्यर्थः तर्हित्वां स्वाहा स्वधारूपिणींउदस्य त्यक्त्वापि
तदुच्चारण मकृत्वापीत्यर्थः क्रतुषु श्राद्धेष च अर्पितानां पुरोडाशादीनां क-
व्यानां च फलभुज स्ते देवाः पितरश्च स्यु र्भवेयुः न भवन्तीत्यत स्त्वमेव मु-
ख्यतया हेतु रसीत्यर्थः तदुक्तं मार्कंडेये यस्या स्समस्तसुरता समुदीरणेन
तृप्तिं प्रयाति सकलेषु मखेषु देवि स्वाहासि वैपितृगणस्य च तृप्तिहेतु रुच्चा-
र्य्यसे त्वमत एव जनैः स्वधा चेति अनुमानालंकारः अत्र धरणिधरतनूजे इति
संबोधनमपि न केवलं त्वं यज्ञादि भुजामेव तृप्तौ हेतुरसि किंतु यष्टुरपि फल
सिद्धौ त्वां त्यक्त्वा सोपि न फलसिद्धिं लभते इति सूचकं तथाहि पुराहित्वा
मनादृत्य यज्ञमारभमाणस्य दक्षस्य यज्ञध्वंसो ऽभूत् अतस्तं सदोषं मत्वा
तज्जनितं शरीरं तत्रैव हुत्वा पुन र्हिमालयस्य पुत्री जातासीति ॥ २६ ॥

न च निजकृतयज्ञा स्तत्समाप्तौ फलंति प्रभवति फलशाली
दावदग्धो न शाखी। फलभु गिह मखानां त द्वत्यैव जंतु
र्निहितनिज वसूनां साक्षिणी वोत्तमर्णः॥ २७॥

इति गूढ मुक्त्वा संप्रति स्पष्टमाख्यातुं परमेश्वरनिरपेक्षया कर्मजनिता
पूर्वादेव शुभाशुभप्राप्तिं मन्यमानानां मीमांसकानां मतं निराकुर्वंतः स्तुवन्ति
नचेति हे भगवति निजेन यजमानेन कृता यज्ञास्तेषां यज्ञकर्त्तृक्रिया द्रव्या-

णां प्राशुतरविनाशित्वा त्समाप्तौ विनाशे सति स्वयं न फलन्ति न हि प्रध्वस्तं कर्म क्वापि फलितं दृष्ट मिति दर्शयितुं दृष्टान्त माहु: यतो दावाग्निना दग्ध: शाखो वृक्ष: फलशाली न भवति यदि दाव दग्धो वृक्ष: फलवान् भवेत् तदा प्रध्वस्तं कर्मापि स्वयं फलेत् अकारणकार्योत्पत्त्तेरुभयत्रापि तुल्यत्वादिति भाव: तर्हि कोन्य: फलदातेत्याहु: तत्तस्मा त्कर्मणां स्वयं फलितु मनोशत्वात् इह यज्ञेषु भगवत्यैवेश्वररूपया यजमानो मखानां फलभु ग्भवति अत्र दृष्टान्त माहु: निहितानां स्थापितानां निजवसूनां धनानां उत्तमर्ण: धनप्रयोक्ता साक्षिणा यथा फलभुग्भवति अयमर्थ: यथा कश्चिदुत्तमर्ण: प्रमाणनिश्चितदीर्घं कालावस्थानं स्वधनार्पणसमर्थं कंचित् साक्षिणं निरूप्य अधमर्णे पलायितेपि एतस्मादेव धनाढ्या त्साक्षिण: सकाशा इदं प्राप्स्यामी त्यभिप्रायेण यस्मै कस्मैचिदधमर्णाय ऋणं प्रयच्छति तद्वदधमर्णस्थानीये कर्मणि प्रलीनेपि तूतएव साक्षिस्थानीया या एतत् फलं प्राप्स्यामीतयभिप्रायेणोत्तमर्णस्थानीयो यजमानो नि:शंकमेव कर्मानुतिष्ठतीति भाव: उत्तमर्णाधमर्णौ द्वौप्रयोक्तृ ग्राहकौ क्रमादितरमर: ॥ २७ ॥

**पवनगतिनिरोधा च्चेतसो देशबंधा दितरविषयशून्यां वृत्तिमापादयंत: । दशशतदलपद्मे ज्योतिरेव तुरीयं किमपि यमिन आनंदाप्लुता वीक्षयंति ॥ २८ ॥**

एवं भगवतो प्रसादेन यागफलप्राप्ति मुक्त्वा विहितानां शुभफलजनकत्वानुपपत्त्याधर्माख्यं मपूर्वं कल्पनीय मिति पक्षो निराकृत:संप्रति नित्यज्ञानेच्छा प्रयत्नवानीश्वरो न सुख इति तार्किकाणां क्लेशकर्मविपाकाशयैरसंसृष्ट पुरुषविशेष ईश्वरश्चितिरूपो न सुखो च नाप्यद्वितीय इति पातंजलानां मत निरस्यंत स्त्वमतेनैवाद्वितीयपरमानन्दरूपत्वं विद्वदनुभवरूपं प्रत्यक्षं प्रमाणं वदन्त: स्तुवन्ति । पवनेति हे अम्ब जननि यमिन: यम नियमादिसाधनसंपन्ना योगिन: दशशतदलपद्मे ब्रह्मरंध्रीयसहस्रारकमले किमपीदं तया वक्तुमशक्यं सत्यज्ञानानन्दात्मकं तुरीयं तुद्रूप मितरर्थ: सम्बन्धस्त्वत्र राहो: शिर इति वदुपपत्र: ज्योति: स्वयं प्रकाशात्मकं रूपं वीक्षयन्ति वेदान्तवाक्यजन्ययाखण्डा-

कारहत्त्याऽपरोक्षो कुर्वन्ति तत्रानन्दस्य निरतिशयतां दर्शयन्ति की० यस्मिन: आनन्दमये समुद्रे आप्लुता: स्नाता: यस्य हि लेशमात्रमपि स्पृष्ट्वा सकलतापो· शमेन सुखिता भवति किमु वक्तव्य तस्य स्नानरूपसर्वांगयोगेनेति कारणाति· शयात् कार्य्यातिशय: सूचित: एतादृशब्रह्मानन्दानुभवस्य साधारण कारण माहु: किं कुर्वंत: पश्यन्ति पवनानां प्राणादीनाङ्गते र्वहि निस्सरणस्य निरो· धात् शास्त्रोपदिष्टमार्गेण कृतप्राणायामत्वादित्यर्थ: तल्लक्षणं तूक्तं पातंजले तस्मिन्सति श्वासप्रश्वासयो र्गते विच्छेद: प्राणायाम इति ततश्च चेतसो वशी करणार्थं देशे मूलाधारादिषट्चक्राणा मन्यतमस्थानेवं धादवस्थापनात् अनेन धारणोक्ता तदुक्तं तत्रैव देशबन्धश्चित्तस्य धारणेति ततश्च इतरविषयेभ्यो वाह्य विषयेभ्य: शून्यां रहितां चित्तस्य वृत्ति मापादयन्त: साधयन्त: अनेन योग उक्त: तदुक्तं तत्रै वयोगश्चित्तवृत्तिनिरोध इति चित्तस्य निर्म्मलसत्त्वपरिणाम रूपस्य या वृत्तय स्तद्रूपा स्तासां निरोधो वहि र्मुखतया पातं परिणति विच्छेदादन्त र्मुखतया प्रतिलोमपरिणामेन स्वकारणे लयो योग इत्यर्थ: अत्र पंचमयावानन्त्यार्थे वृत्तिनिरोध इतो वा बोद्धयन्तीति स्वार्थे णिच् ॥ २८।

फणिन मधिशयानो धातु राधार एष प्रभु रपि गत आधेय त्व मेषोपि शेष:। परिलुठति पयोधौ तस्य चाधारभूता त्व- मसि तलविहीनस्या प्य त स्त्वां श्रिता: स्म: ॥ २९ ॥

एवं योगिगम्या मुक्ता सांप्रतमाधारभूता जगतस्त्वमेकेति प्रतिपादयितु माधेयापेक्षया आधारस्य महत्त्वादाधाराणामप्याधारभूतां भगवतीं प्रतिपा- दयन्त: स्तुवन्ति फणिनमिति हे भगवति एष प्रभु र्विष्णुर्धातु र्ब्रह्मणआधारो स्ति तन्नाभिपद्मं श्रितवतो ब्रह्मण आधेयत्वादतो विष्णु र्महानाधारत्वादिति भाव: अथैष विष्णुरपि फणिनमधिशयान: फणो शेषे आधारे शयान: आधे यत्वं गत: अत: शेषो महान् अथेष शेषोपि पयोधौ परिलुठति अत: शेषाधा रत्वात्पयोधि र्महान् अथ तस्य पयोधेराधारभूता तु त्वमेवासि ननु तस्याधार मन्यत्तलं कल्पयाम इत्याशंक्याह कीदृशस्य तलविहीनस्य अपि शब्दोऽवधा-

रणे तलविहीनस्यैवेत्यर्थः तेनाधारभूततलस्याभावे स्थिते रभावात्तस्याधार स्वमवश्यं कल्पनीया अथ कल्पितेप्यन्यस्मिन्नाधारे तस्याप्याधारान्तरं स्यादि त्यनवस्था प्रसङ्गः अत स्त्वामेव सर्वेषा माधारभूतां वयमपि श्रिताः विष्णादी नां त्वाश्रियत्वा त्तदाश्रयणं नातिवर मितीतराश्रयणनिवृत्तिः सूचिता अधि शीङ् स्थासामाधारः कर्मेति फणिन मिति द्वितीया अत्रोत्तरोत्तरौत्कर्ष्यात्सा-रालङ्कारः ॥ २९ ॥

वटकिसलयतल्पं कल्पकाले शयालुं कि मिति किमु निदानं मे च सिंधौ स्थितिः क्व। इति मुखधृतपादांगुष्ट माचिंतयंतं हरि मवहरिडिंभं चक्रिथ प्राप्ततत्त्वम् ॥ ३० ॥

ननु विष्णुरपि भक्तांना माश्रयोस्तीत्याशंकापनुत्तयेसोपि त्वत्तएव किंचि त्तत्वज्ञानं लब्ध्वा भक्ताना माश्रयो जात इत्याचक्षाणाः स्तुवन्ति वटेति हे अघ हरि दुरितनाशिके स्वभक्तस्याज्ञानरूपे दोषनाशिके वायुराकल्पकाले प्रलयान्ते वटस्य किसलयं पत्रं तदेव तल्पं तस्मिन् शयालुं तं डिंभं शिशुरूपं हरिं विष्णी त्वमेव प्राप्ततत्वज्ञानं चक्रिथ कृतवती कीदृशं अज्ञानोपहितत्वात् आसमन्तात् चिंतयन्तं इति किं इतीदं दृश्यमानं मम शरीरं वटो वा किमस्ति अथ मम निदानं कारणं वा किमस्ति कुतोहं जात इत्यर्थः अथच अत्रसिन्धौ प्रलयाब्धौ मम स्थितिःक्वे ति कुतो जाता पुनः कीदृशं बालप्रकृतित्वात् स्तनाशङ्कया मुखे धृतः पादस्याङ्गुष्ठो येन पूर्वं हि प्रलयाब्धा वित्थंभूतं हरिं प्रति भगवती प्रादुर्भू येत्याह हे वत्स त्वमस्य जगतः सृष्ट्याद्यर्थं मयोत्पादितोसि इदं हि सर्वंमन्म यमित्यादितत्त्वमादिष्टवतीति सेति ह्यास्य देवीभागवतादवगन्तव्यम् ॥ ३० ॥

भजति हिमगु मेणो निर्जित स्ते सुदृग्भि र्हिमगु रपि गिरीशं त्वन्मुखश्रीहृतश्रीः। प्रणमति गिरिशोपि त्वां सती मूर्ध्नि धृ-त्वा ऽनुनय मिव विधातुं त्वां विना ह्याश्रयः कः ॥ ३१ ॥

एवं विष्णो राश्रय मुक्त्वा सम्प्रति सर्वेषा माश्रयभूतत्वेन भगवतीं लोकोत्तरो रीत्या स्तुवन्ति भजतीति हे भगवति तव शोभनाभि र्दृग्भि र्निर्जितः एणो

मृगः हिमगुं चन्द्रं भजतीति अन्योपि केनचिन्निर्जितः स्वरचार्थे महान्तं श्रयति अथ स चन्द्रोपि तव मुखस्य श्रिया शोभया हता दूरीभूता श्रीर्यस्य तादृशः सन् गिरिशं शिवं भजति अथ स गिरिशोपि तौ श्रिया जितौ मृगचन्द्रौ मूर्ध्नि धृत्वा स्वात्मानं त्वद्विपचाश्रयणादपराधिनं मन्यमानः तव अनुनयं क्रोधाय नय मिव विधातुं साम्प्रतं त्वां प्रणमति ननु मृगचन्द्रवत् शिवोप्यन्यं किं श्रित इत्याहुः हि यतः त्वां विना कः अपर आश्रयोस्ति श्रितेप्यन्यस्मिन् पुनरपि त्वदितराश्रयाभावात्प्रथममेव त्वदाश्रयणं युक्तमिति भावः अन्योपि महाराजस्तु- स्तं यं कंचिदपि परित्यजन् स्वयमपि भीतस्तमग्रे कृत्वा क्रोधाप नयनाय प्र- णमति ॥ ३१ ॥

**महति फणिनि विष्णो र्निद्रया घूर्णितस्य श्रुतिमलजनितौ - तौ दानवा वत्तुकामौ । इति विधि रपि दृष्ट्वा यां तुतोषासि काली दशपदमुखि हंत्री तूं मधोः कैटभस्य ॥ ३२ ॥**

न केवल मधुनैव महिषं हत्वा त्वया वयं रक्षिताः किंतु पुरापीति दर्श- यितुं महाकालीरूपेणस्तुवन्ति महतीति पूर्वं जगत्येकार्णवीकृते सति महति फणिनि शेषनागे निद्रया निद्रारूपिण्या भगवत्या आघूर्णितस्य विष्णो र्वाम हस्तकनिष्टिकाधर्षणजातात् श्रुतयोः कर्णयो र्मलात् जनितौ तौ मधुकैटभ नाम दानवौ ब्रह्माणमत्तु कामौ भक्षितु मुद्यतौ जातौ अथ विधि र्ब्रह्मापि इत्येवं विधौ दृष्ट्वा विष्णो र्नाभिकमले स्थितः सन् यां एकाग्रमनसा स्वरचाय तुतोष सा कालीरूपा त्वमेवासि अस्या ध्यानमाहुः दशमिताः पदा मुखानि च यस्या स्तत्संबुद्धि स्तथा उपचलणमेतत् तेन भुजा अपि दशमिता बोध्याः मध्यमपदलोपित्वाद्वा भुजपदलोपः अस्याः कृतयमाहुः तस्या तु कामस्य मधो कैटभस्यापि हंत्री विष्णो रङ्गानि त्यक्त्वा र्बहिस्थिता सती तयो र्बुद्धिमोहयित्वा विष्णु च योध यित्वा तौ हतवतीत्यर्थः अस्याः सायुधं ध्यानं तूक्तं खड्गं चक्र गदेषु चापपरिघान् शूलं भुसुण्डीं शिरः शंखं संदधतीं करे स्त्रिनयनां सर्वाङ्ग भूषावृतां यामस्तौत् सुपिते हरौ कमलजो हन्तुं मधुकैटभं नीलाश्मद्युति मास्यपाददशकां सेवे महाकालिकामिति ॥ ३२ ॥

यदि वय ममुना प्रा क्कांदिशीकीकृता द्राक् परमविपद माप्ताः सार्धं मीशात्मभूभ्यां। हरिमभिगतवंत स्तच ते जातकोपे निहि तनिजमहोभिः प्रादु रासी स्त्व मीशि ॥ ३३ ॥

अथ प्रतरचायाः श्रीमहालक्ष्म्या अवतरणहेतुं प्रदर्शयन्तः स्तुवन्ति यदीति हे ईशि प्राक् पूर्वं यदि यस्मिन् काले वय मिन्द्रादयो देवाः अमुना महिषेण द्राक् शीघ्रं कां दिशी कीकृतास्सन्तः परमां विपदं वनदुर्गमादिभ्रमणरूपां प्राप्ताः तदानीं गुरुणा मन्वयित्वा ईशात्मभूभ्यां शिवविधातृभ्यां सार्द्धं हरिं प्रति वयं गतवन्तः तत्र हरिलोके च तैः शिवादिभि रस्माभिः जातकोपैः सद्भि स्त्वं महालक्ष्मीः प्रादुरासीस्त्वैः कृता निजेन त्वयैव तेषु पूर्वं निहितै र्महोभिः कृत्वा पूर्वं त्वमेवास्मच्छरीरेषु तेजोरूपेण स्थितासीः पुनरस्म त्प्रार्थिता सती स्व भक्तानुग्रहाय ततः प्रादुर्भूता नतु जाते त्यर्थः ॥ ३३ ॥

रणमखधृतदीक्षा कुर्वती माहिषं त्वं बलि मपि दनुजासून्जुह्व ती कालवह्नौ रुधिरघृतविलिप्तेनत्रिशूलस्रुवेण प्रचुरमुद मदा त्सी र्नः स्तदुद्वीक्षणेन ॥ ३४ ॥

तत्कर्म स्तुवन्ति रणमखेति सा त्वं महालक्ष्मीः रणरूपे मखे धृता दीक्षा यया तादृशी सती माहिषं महिषस्य बलिं कुर्वती तथा दनुजानामसून् प्राणान् हव्यरूपान् तेषां रुधिररूपेण घृतेन कृत्वा विलिप्तेन त्रिशूलरूपेण स्रुवेण कालरूपेण वह्नौ जुह्वती सती तस्य रणमखस्य उद्वीक्षणमात्रेणैव नोऽस्मभ्यं परममुदमदात्सीः यज्ञे प्रवृते तत्फलं भुक्त्वा देवा मोदन्ते अत्र तु दर्शनमात्रेणैवे ति मखाद्रणमखस्य विशेषाभिव्यञ्जनाद्व्यतिरेकालङ्कारः ॥ ३४ ॥

ललितदति भवत्यैवैष संवर्धितः प्राक् मदमल मपहर्तुं नः श चीशादिकानाम्। विपदपहृतये न स्त्वं त्व मेवा वधीर्द्रा क्क रतति रिव सौ रीस्त्वीयधर्म्मं स्वष्टुत्रा ॥ ३५ ॥

न चास्मद्रक्षणे शत्रुनिग्रहे च तव वैषम्यापत्ति र्नियन्तृत्वादित्याचक्षाणाः स्तुवन्ति ललितदतीति हे शोभनदन्ति एष महिषः प्राक् पूर्वं भवत्यैव संवर्धितः ऐश्वर्यादिभि रिति शेषः ननु दुष्टस्य संवर्द्धने महाननय इत्याशंक्याहुः किं कर्तुं अस्माकं शचीशादिकाना मिन्द्रादीनां देवानां मदमशास्त्रीयविषयसेवोन्मुखत्वनात्मन्यत्यन्तपूज्यत्वातिशयाध्यारोपस्तदेवमलिनप्रकृतिकत्वान्मलंतद पहर्तुं नाशयितुं प्रतुयतत्वया मदरूपस्यास्मद्रोगस्यतत्संवर्द्धनरूपःप्रतीकारोऽकारीत्यर्थः तर्हि पुनः कथं हत इत्यतआहुः अथ तत्कृतपराभवात्मदेविनष्टेसतिअस्माकं भक्तानां परमां विपदं वीक्ष्य तस्या अपहृत्तयेनाशाय पश्चा त्वमेव तत्सम्वर्द्धनकर्त्री तं महिषं अवधीः हतवतीत्यर्थः अत्र स्वयंसम्वर्द्धने पश्चात्स्वयं नाशने च दृष्टान्त माहुः सौरी सूर्यसम्बन्धिनी कराणां नतिः स्वेनैव जनितेघर्मं निदाघ स्वजनितयैव वृष्ट्या यथा हन्ति तद्वदित्यर्थः ॥ ३५ ॥

**वरतनु मतनु स्त्वां वीक्ष्य संहृष्ट आसीत् त्रिभुवन मपि जेतुं शक्य मेवानये ति। अथ हरि जगदंवां त्वां स मत्वा ललज्जे मुहु रपि मुदितो भू च्छम्भु हृन्मोहिनीति ॥ ३६ ॥**

इदानीं तस्याः सौन्दर्यातिशयं दर्शयन्तः पार्वतीरूपेण स्तुवंति वरतनुमिति हे भगवति अतनुःकामः त्वां वरतनुं अतिसौंदर्योपितशरीरां वीक्ष्य इति मत्वा सम्यक् हृष्ट आसीत् इति किं मया कामेन केवलमनयैव देव्या त्रिभुवनमपि जेतुं शक्यं किमन्यै र्वनिता वसंतचन्द्रादिभि रित्यर्थः एकेनैवास्त्रेणकार्यसिद्धौ बहूनांधारणस्या नौचित्यात् अथैवं चित्ते हृष्यन्नेव स कामः पुन स्त्वां जगता मम्बां मातरं मत्वा निश्चित्य मनसैव ललज्जे अहो मया कुधिया किं चिंतितं यता जगन्मातर्यति जगतां दोषदृष्टिःप्रतिपादितेति लज्जितोभूदित्यर्थ अथेति लज्जमान एव मुहुरपि त्वां शंभुहृन्मोहिनी मिति मत्वा मुदितोऽभूत् अयमर्थःमाभूज्जगतां मोहिनी परन्तु ममशत्रोः शम्भोस्तु हृदयं मोहयिष्यतीति हृष्टोऽभूत् अत्र स्वय मुक्तस्य तद्विचारणात्स्वयं निषेधादाक्षेपालङ्कारः ॥ ३५ ॥

**शरण मसि शरण्ये त्वं हि संसृतारण्ये गिरिपरिवृढकन्ये के श रण्या स्त्वदन्ये रिपुतति रपि जन्ये यत्त्वया हत्यनिन्ये त्रिद शपुर मनन्ये चित्र मत्रातिधन्ये ॥ ३७ ॥**

शरणमिति हे शरण्ये अस्मिन् संसृतिरूपे अरण्ये त्वमेव शरणमसि ननु विष्णवादयो न सन्तीतयाशंक्याहुः हे गिरिषु परिवृढस्या नायकस्यहिमालयस्य कन्येत्वत: अन्ये इतरे विष्णवादय: के शरण्याः सन्ति न केपोत्यर्थः अत्र हेतु माहुः यद्यस्मात् रिपूणां ततिरपि जन्ये युद्धे त्वया आहत्य त्रिदशपुरं स्वर्गं प्र-तिनिन्ये नीता हे अनन्ये अद्वितोये अनन्यसाधारणकरुणाशीले वा तथा हे धन्ये अत्र स्वभक्तवत् रिपूणामपि स्वर्गादिलोकप्रापणे अतिचित्रमस्ति मच्छ-स्त्रैः पूता रिपवोपि स्वर्गान् प्रयान्तु इति दययैव तानपि निहंसीति भावः तथोक्तम् लोकान्प्रयान्तु रिपवोपि हि शस्त्रपूता इत्थंमति र्भवति तेष्वपितेति साध्वोति यदि दुर्जनानपि स्वर्गान्नयसि तर्हि का वार्ता सज्जनाना मिति भावः ॥ ३७ ॥

**षडपि कुवलयान्याधारसल्लिंगनाभिह्रद्हृदयसुकण्ठभ्रूद्वयोम ध्यगानि । सकलजननि भित्त्वा स्वाकसहस्रारपद्मे सह रहसि शिवेन क्रीडसे सर्वदा त्वम् ॥ ३८ ॥**

सम्प्रतियोगिगम्यं सूक्ष्मध्यान माहुः षडपोति षट्चक्राणि मूलाधार स्वाधिष्ठानमणिपूरानाहतविशुद्धाख्यानि क्रमेण पृथिव्यादि पंचमहाभूतानां मनसश्च स्थानानि एतत्षट्चक्रं कुलपथ इत्युच्यते तदुपरि शिरःस्थं सहस्र दलमकुलपथ इत्युच्यते हे सकलानां वर्णानां जननि मातः कुण्डलिनोस्वरूपे आधारादोनि षट् कुवलयानि कमलानि स्राक् शोघ्रं भित्त्वा सहस्रारपद्मे शिवेन सह सर्वदा त्वं क्रोडसे इत्यन्वयः अयमर्थः आधारे मूलाधारे महीस्थानं चतुर्दलपद्मं भित्त्वा सति शोभने लिङ्गे स्वाधिष्टाने जलस्थानं षट्द भित्त्वा नाभिह्रदे मणिपूरे वह्निस्थानं दशदलं भित्त्वा हृदये ऽनाहते मरुत्स्थानं द्वा दशदलं भित्त्वा सुकंठे विशुद्धे नभः स्थानं षोडशदलं भित्त्वा भ्रूद्वयोमध्यगे

श्राज्ञाचक्रे मनः स्थानं द्विदलकमलं भित्त्वा ब्रह्मरंध्रे सहस्रदले कुलपथे शिवेन सह सर्वदा तु रमसि एतावता एतद्ध्यानयोगिभिरोपास्यमानां भूमित्या-गादिसिद्धिं दिशसि सहस्रदलेन संयुज्यमाना निर्वाणपदवीं दिशसि तदुक्तं कादिमते मूलादि ब्रह्मरंध्रान्तां स्फुरद्विद्युल्लताकृतिम् ध्यायेत् कुण्डलिनीं देवीं तुरियाक्षररूपिणीम् षट्चक्रभेदिनीं देवीं तां च विन्दुत्रयात्मिकाम् तां च सर्वकलारूपां चिंतयेत्पद्मकानने एवं भावनया जुष्टः परमानन्दनिर्भरः संसारसागरं धीमान् गोष्पदी कुरुते क्षणादिति सिद्धिसोपानेपि संयोजयन् शिवपदे शिव एव प्रजायते कर्त्ता हर्त्ता च सर्वत्र सुरासुर नमस्कृत इति ३८

**सकलजनसवित्री चापि शैलेन्द्रपुत्री त्रिभुवनविनिवासा भक्तहृत्पद्मवासा। अपृथगपि शिवा तु दाहिके वा श्रयाशात्प रिणयविधितो भूः शम्भुपत्नी ति चित्रम् ॥ ३९ ॥**

ननु पुराणेभ्यः श्रूयते तावद्धिमालयस्य पुत्रीभूत्वा चिरं तप्त्वा च भगवती शिवेन परिणीता सती पश्चात्तेन क्रीडयामास कथं तर्हि शिवेन सर्वदा क्रीडसे इत्युक्त मित्याशंकापनोदायाहुः सकलेति हे भगवति इति चित्रमस्ति तवाचिंत्यमहिमत्वात्तवाश्चर्यमयानि चरितानि सन्ति तानि त्वमेववेत्सि नान्य इति भावः चित्रतामेवदर्शयन्ति यतस्त्वं सकलस्य ब्रह्मादिस्तंभान्तवर्तिजनस्य सवित्री जनन्यपिश्रुतिभिः प्रतिपादितासि तथापि शैलेन्द्रस्य हिमालयस्य पुत्री जातासि तथा त्रिभुवनस्य विनिवासो यस्यां तादृश्यपि सती भक्तस्य हृदयरूपे पद्मे वासो यस्या स्तादृशी जातासि अपरिच्छिन्नापि स्वभक्तभक्तिकर्षिता परिच्छिन्नो भूतासी त्यर्थः तथा तु आश्रयाशात् अग्नेः सकाशात् दाहिका शक्ति रिवात्यन्तं शिवात् अपृथक् अभिन्नापि सती परिणय विधित हिमालयपुत्री भूत्वा पश्चाद्विवाहविधिना शम्भोः पत्नी अभूः जातासि तदेतद-तिचित्रमस्ति तदुक्तं पंचस्तव्यां सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः सदोषं तं हित्वा तदनुगिरिराजस्य तनया अनाद्यन्ता शम्भो रपृथगपि शक्ति भंगवती विवाहाज्जायासीत्यहह चरितं वेत्ति तव का इति ॥ ३९ ॥

**हृदयपरपदं ते तद्धि बुद्धेर्दवीयो भजति विमलवाचां कुण्ठतां यत्र गुम्फः। विधुशकलललाटां चारुमुक्ताप्रवेकैः सुरतरुसुमनोभिर्मालिनीं त्वां भजामः ॥ ४० ॥**

अथ निर्गुणरूपस्य वाङ्मनो ऽगोचरत्वाद्दुर्ग्राह्यतां निश्चित्य सगुणरूपस्य तु सद्यो भक्तिग्राह्यत्वात्तदेव स्वाभिमतत्वेन मुख्यतया प्रतिपादयन्तः स्तुवन्ति हृदयेति हे भगवति तत् तव निर्गुणं निर्विकल्पिकं रूपं हृदयादपि परपदमस्ति अथ मनसस्तु परा बुद्धि रिति गीतोक्तेः स्वल्विं बुद्धिरसि नेत्याहुः तत्तु बुद्धेरपि दवीयः अतिदूरमस्ति अनेनात्मनोपि परत्वं सूचितं यथा तत्रैवोत्तरपादे यो बुद्धेः परतस्तु स इति बुद्धेः सकाशादात्मनः परत्वं प्रतिपादितं इदं प्रति दूरत्वात्ततोपि परमित्यर्थः ननु माभून्मनो बुद्धिविषयं किं तु वाचैव स्तूयता मित्याशंक्याहुः यत्र यस्मिन् निर्गुणस्वरूपे विमलानां वाचां महा वाक्यानाम पि गुंफोग्रंथः कुंठता मतइग्रा हत्या मंदतां भजति अथैवं सति ध्येयाभावा न्मुक्त्यभावे जगदांध्यप्रसंग इत्यशंका निरासाय सगुणरूपस्य ध्येयतां स्वाभिमतां दर्शयन्ति तस्माद्धेतो स्त्वां स्वभक्तानुग्रहाय धृतसगुणरूपां वयं भजामः सुग्राह्यत्वा त्सगुणमेव सेवाम इत्यर्थः सगुणध्यान माहुः को॰ त्वां विधोश्चन्द्र स्य शकलं खंडमर्धमितियावत् ललाटे यस्याः तथा चारुभि र्मुक्ता प्रवेकैः मौक्तिकवर्यै स्तथा सुरतरूणां मंदारादीनां सुमनोभिः कृत्वा मालिनीं मालावतीं उपलक्षणमेतत् तेन नेत्रत्रयाष्टा दशभुजा नुपेतत्वग्रहः एतावता सात्त्विकं ध्यानमुक्तं प्रकर्षेण दूरं दवीयः दूरस्य दवा देशस्तत ईयसुः अत्र मालिनी वृत्त समाप्तौ तन्नामाप्यभिहितम् ॥ ४० ॥

त्रयस्त्रां ते वासं यद कृत हरे श्चित्तकुहरे
तदित्थं ते मात श्चरण कमलं निश्चिनुमहे
जगत् स्रष्टुं नाभे स्सरस इव विष्णो रुद्भव
त्ततो जातो धाता तत इद मभू द्विश्व मखिलम् ॥ ४१ ॥

न केवल मस्माभि रेव प्रतिपाद्यते किं तु विष्णवादयोपि तुल्यदाम्नाया नेनैव स्रष्ट्यादौ शक्ता भासन्निति दर्शयन्तः स्तुवन्ति चयस्येति हे मातः पूर्वं प्रलयाब्धौ योगध्यानमाश्रितस्य हरेश्चित्तरूपे कुहरे विवरे यत्तव चरणमेव कमलं तत् वा समकृतकृतवत् तदेव तुच्चरणकमलं चयस्यांते स्रष्ट्यादौ इत्थं-भूत मासीदिति वयं निश्चनुमहे निश्चयं कुर्मः इत्थं कथ मित्यत आहुः तदेवां तस्तिरोहितं चरणकमलं स्रष्ट्यादौ जगत्सृष्टं रचयितु गंभीरता त्सरस इव सरस्तुल्यात् विष्णो र्नाभिः सकाशा दुदभवत् वाह्यकमलरूपेण प्रकटीभूत मासीत् अग्रे विद्यमानमेव प्रादुर्भूत मित्यर्थः ततश्च कमलात् धाता जातः ततश्च धतु रिद मखिलमपि विश्वमभूत् अतस्तव चरणकमलमेव विश्वोत्पादने मुख्यतया विष्णवादयस्तु निमित्तमात्र मेवेत्यत स्तव पादाब्जस्यापीयती शक्ति रस्ति तर्हि किमु तव वक्तव्य मिति भावः अतस्तदेव ध्येय मिति पर्य्यवसन्नम् कार्य-निवन्धना अप्रस्तुत प्रशंसेयं अत्र चरणमेव कमलमिति मयूरव्यंसकादयश्चे-त्यनुशासनेनोत्तरपदप्रधानः समासः ॥ ४१ ॥

त्रिनयनां शृणिपाशधनुःशरा न्विदधती मरुणां करुणाकरीम्
मनुभजाम सदा निजदेवतां हृदयतामरसे मरसेवितां ॥ ४२ ॥

स्वेष्टध्यान पूर्वकं स्तुवन्ति त्रिनयनामिति वयं तुल्सप्रदायानुरोधिन स्वां निजदेवतां स्वेष्टदेवतारूपां त्वां हृदये तामरसे कमल इव सदा अनुभजाम कीदृशीं अमरैः सेवितां अमरेण परमात्मनापि वा सेवितां तथा त्रियनां तथा शृणिपाशधनुः शरान् विदधतीं अनेन चतुर्भुजता सूचिता तथा अरुणां रक्तवर्णां तथा करुणाकरीं अनेन सर्वेषा मप्येतस्यैव ध्यानस्य ध्यातृता निर्दिष्टा सर्वांकुशं नाना रत्नखचित स्वर्णमयं तच्च वामोर्ध्वकरे पाशश्च रक्तपट्टनिर्मितः दक्षोर्ध्वे धनुश्चैवं वामाधश्शरा रक्तोत्पलनीलोत्पलकह्लारकुरवकसहकार-मंजरीरूपाः पंचदक्षाधः करेध्येयम् एतस्य एव महाविद्याया ध्यान मन्यत्राप्युक्तम् वालार्कमंडलाभासां चतुर्बाहुं त्रिलोचनाम् पाशां कुशशरां श्चापं धारयन्तीं शिवां भज इति ॥ ४२ ॥

शक्तिस्त्व परमे शिवेसि परमा श्रीः श्रीपतौ सर्वदा
गीर्गीर्वाणगुरौ गिरौ तु गुरुता क्ष्मातां क्षमासि ध्रुवम् ।
भा भानौ नितरां रुचिः शुचिरुचौ मुद्रा समुद्रे पुनः
सर्वासां धुर मेक एव वहते त्वद्भक्त आसां शिवे ॥ ४३ ॥

इदानीं सर्वशक्तिरूपत्वा द्विभुत्वद्योतनाय क्वचित्प्राधान्येन तत् स्थिति प्रतिपादयन्त स्त्वद्भक्तस्य च माहात्म्यं वर्णयन्तः स्तुवन्ति शक्तिरिति हे भगवति त्वं परमे शिवे परमात्मनि चितिरूपा परमाशक्ति रसि यया सौचिद्रूपो गीयते तथा श्रीपतौ विष्णौ सर्वदा श्रीरसि तथा गीर्वाणानां देवानां गुरौ बृहस्पतौ गीर्वागसि तथा गिरौ जातावेकवचनं गिरिष्वित्यर्थः गुरुता गौरवमसि तथा-क्ष्मायां भूम्यां क्षमाभूरिभारसहिष्णुतासि तथा भानौ सूर्ये भा प्रभासि तथा शुचिर्विशदारुग्दीप्ति र्यस्य तस्मिन् चन्द्रे रुचिः कान्तिरसि तथा समुद्रे मुद्रा-मर्योश्चासि अथ हे शिवे अमी परम शिव समुद्रा तां व्यस्तां व्यस्तां तव शक्ति दधति त्वद्भक्तस्तु आसां शक्त्यादिमर्यादां तानां सर्वासां शक्तीनो धुरं भारं एकएव वहति धारयति परमशक्तिमान् श्रीमान् वाग्मी गौरववान् क्षमावान् तेजस्वी रुचिमान् समर्यादश्च भवतीत्यर्थः अत स्त्वद्भक्तः सर्वेभ्योपि गरी-यानित्यर्थः ॥ ४३ ॥

अयि जननि न शंभु र्न स्वभू र्न स्वयंभूः
किमपि तव महत्त्वं वक्तु मीष्टे वयं क्व ।
खगपति रपि यत्र श्रांति मेत्येत्य नांतं
गति मल मनु मंतुं तव कक्षाटकेरौ ॥ ४४ ॥

इदानीं भगवती महिमोत्कर्षातिशयं स्वमतापकर्षातिशयं च दर्शयन्तः स्तुवन्ति अयीति हे जननि किमपि इदं तया वक्तुमशक्यं महत्वं वक्तुं शंभु र्न ईष्टे न समर्थः नापि स्वभू विष्णु नापि स्वयंभू र्ब्रह्मा तर्हि वयं शक्रादयः क्व समर्थाः न क्वापि अत्र दृष्टान्तः यत्र यस्मिन् देशे अर्णाभमसि गरुडोपि श्रमं

प्राप्य तदन्तं न प्राप्नोति तस्मिन्नभसि चटका पतत्यस्य अन्तं प्राप्तौ गतिं अनुमन्तुं कोवुधः समर्थो न कोपीतर्थः पुमपतरे चाटकैव इतरमरः ॥ ४४ ॥

अयि जननि गिरां त्वदीयवाग्भिः
स्तुति रियमस्ति तवैवमेधया पि
अभि मति रिह का स्वकर्तृतायां
सलिलपतेः सलिलै रिवार्घ्य दाने ॥ ४५ ॥

संप्रति स्तुति मुपसंहरंतस्तत्कर्तव्यतायां साभिमतिं स्वाभिमतिं निरा कुर्वंति अयीति कोमला मंत्रणे हे गिरांजननी त्वदीयाभि रेव वाग्भि स्तवै-व च मेधया धारणावत्याबुद्ध्या इयं स्तुतिरस्ति तस्मा दिह मु कर्तृतायां स्तुति मयाकृतेति विषये का अभिमति रस्ति परा पश्यंति मध्यमा रूपया त्वयो का सितवैखरो समुज्जृं भिततन्मया मातृकाक्षरे स्तवैव कृति रिय मतो ऽस्माकं स्तुतौ कर्त्रि तैवनास्तोति भावःअत्र दृष्टांत माहुः यथा सलिल पतेः समुद्रस्यैव सलिलैःसमुद्रस्यै वार्घ्यदाने काभभि मतिर्भवति नच तच्चु लिकामितं सलिलं तत्समये भवति तथापि सुभक्त्यापितं गृह्णाति तथा तवापि सर्वैश्वर्य संपन्नाया अनया स्तुत्या न काचिद्विशिषता उत्कर्षता जाता परंतु भक्त्या पितामिमां स्तुतिंगृह्णास्ये वेत्यपि ध्वनितम् ॥ ४४ ॥

इत्येवं त्रिदिवाधिपैर्भगवति सर्वात्मनाभिष्टुता
रम्यै नंदनसंभवैश्च कुसुमै र्धूपादिभि श्चार्चिता
ब्रूते स्म प्रति तान् प्रसादसुमुखी कारुण्यपूर्णाशया
हे देवा व्रियतां यथाभिलषितं तुष्टास्म्यहं वः स्तवैः ॥ ४६ ॥

इतीति सा देवी भगवती इतरे वंदेवैः सर्वात्मतया सर्वस्वरूपत्वे न महाकाल्या दि स्वरूपत्वे न वा अभिष्टुता सती रम्यै नंदनवनसंभवैः कुसुमै र्धूपादिभिश्च तैरर्चिता पूजिता सति अथ तान्देवान् प्रतिप्रसादेन सुष्टु मुखं यस्या स्ताद्द कोमरुण्येन पूर्णआशयो मानसो यस्या स्ताद्दशी च सती ब्रूतेस्म किमित्याह

र्भवत्या देवाः युष्माभिर्यथाभिलषितं तथा क्रियतां कुत इद मुच्यतेतत्राह
यतोऽहं वो युष्माक मेभिः स्तवैः सुतुष्टास्मि ॥ ४५ ॥

तेथोचु र्भगवति किं परं वृणीमः
सर्वं संप्रति ननु साधितं भवत्या।
यद्दृष्टा खिलजगतां न केवलं नो
जघ्ने सौ युधि परिवारसैन्य वारैः ॥ ४७ ॥

तेइति अथ ते देवा ऊचुः हे भगवति अतः परं वयं किं वृणीमः यतो भवत्या संप्रति सर्वमेव कार्यं ननु निश्चयेन साधितं किं साधन मित्यतआहुः यद्यस्मात् केवल मस्माकमेव न दृष्टा किंतु सर्वजगतामपि दृष्टा ऽसौ महिषः त्वया युधि परिवारैः बंधुभिः सैन्यानां सैनिकानां वारैः समूहैश्च सह जघ्ने हतः अतो ऽस्मदनुग्रहमिषेण सर्वजगतामपि शल्यं त्वयोद्धृत मिति भावः ॥ ४७ ॥

क्षणमात्रकृतस्य वा वयं प्रतिकल्पं सदनुग्रहस्यते
जननि प्रतिकृत्य मीश्महे न विधातुं ह्यपिधातुरायुषा ॥ ४८ ॥

न च भवद्भि रस्मं स्तुत्यादि रूप उपकारः कृतः अत स्तत् प्रत्युपकाररूप वरदान मवश्यं कार्य मिति वाच्यं सर्वदा तवैवोपकारकर्तृत्वा दित्याहुः क्षणमात्रेति हे जननि प्रतिकल्पं प्रतियुगं क्षणमात्रमपि कृतस्यतवानुग्रहस्य प्रतिकृत्यं प्रत्यनुग्रहं विधातुं कर्तुं धातु रायुषाद्विपरार्धपरिच्छिन्नकालेनापि वयं न ईश्महे न समर्था भवामः तर्हि कि यानयं स्तुत्यादिरूपउपकारः प्रत्युतायं स्वार्थमेव कृतो नत्वेतावता तवापि काचित्सिद्धि रिति भावः ॥ ४८ ॥

तथा पि माता न निजोपकारान्
सुतापकारान् गणयेत्कदाचित्।
सुता स्तु नित्यार्थितया प्रसिद्धाः स्थितः
कथंस्य ह्यदि चा न्यथास्यात् ॥ ४९ ॥

नन्वन्य न कृतोपकाराणां प्रत्युपकारमकृत्वाधर्मश्च्युतिप्रसंग इत्याशंक्याहु: तथापीति एवं त्वयोपकारेषु बहुषुकृतेषु स्वल्पेपि तत् प्रत्युपकारे ऽस्माभिरकृतेपि यथा माता निजोपकारान् सुतानां चापकारान् कदाचिदपि न गणयेत् तथा त्वमपिनिखिलमातृत्वात् त्वपकारान् न गणयसि मातृप्रकृति मुक्त्वा सुतानां प्रकृति माहु: एवं मातर्युपकारान् कुर्वाणायां तु यं चापकारान् कुर्वाणा अपि सुता नित्य मर्थितया याचकतयैव प्रसिद्धा: संति यथा सुता इत्थं भूता अपुन: पुनर्मातरं याचंते तथा वयमपीतयर्थ: उपकारप्रत्युपकाररूपो नियम तुल्यत्व मित्रादाविवास्तु नतु सुतमात्रो: एव मेव सनातनप्रवृत्ते रिति इत्थं ननु कुत इयं विपरीता प्रवृत्ति र्जातेत्याशंक्याहु: यदि अन्यथा स्यात् माता सुताना मुपकार प्रतीक्ष्य तत्सदृशमेव स्वल्पं प्रत्युपकारं कुर्यात् तर्हि सुताना स्थिति जीवनादिका कथं स्यात् तेषां क्षणमात्रमपि कृतस्य मातुरूपकारस्य प्रप्रत्युपकारं कर्तु मशक्यत्वात् ॥ ४९ ॥

तस्मा त्वदित्ससि वरं प्रवरं शिवे चे
द्देह्येन मेव वरदे यदिवो परिष्टात्
वाधा तवे दसुरजा तदनु स्मृताया
हंतव्यतां व्रजतु ते द्रुतमेव मेव ॥ ५० ॥

इति युक्त्या मात्मनि वरदानयोग्यतां प्रतिपाद्य वरं वरयन्ति तस्मादिति हे वरदे यस्मात् पूर्वोक्ताद्हेतो: यदि तु प्रवरं श्रेष्टं वरं प्रदित्ससि दातु मिच्छसि तर्हि एनमेव वक्ष्यमाणं वरं देहि किमित्याहु: यदि यदा यदा उपरिष्टात् अग्नेपि अस्माकं असुरजा वाधा पीडा भवेत् तदनु तत्पश्चादस्माभि: स्मृता या स्तव एवमेव यथा ऽधुना महिषजा पीडा हता तथा सापि हंतव्यतां द्रुतं व्रजतु सापि त्वयाहंतव्येत्यर्थ: ॥ ५० ॥

किं च य: स्तुतिभि राभि रादरात्
स्तोष्यतीह भवतीं भवापहाम् ।

तस्य वित्तसुतदारसंपदः संतु
संततसमुच्छ्रिताः शिवे ॥ ५१ ॥

इयं स्वाभीष्टं वरमर्थयित्वा लोकोपकाराय संप्रतिवर मर्थयन्ति किं चेति हे शिवे किंचान्यमपि वरं वृणीमः कमितत्राहुः यः कश्चिदन्योपि पुमान् आभिः पूर्वोक्ताभिः स्तुतिभिः भवतीं त्वामिह आदरात् स्तोष्यति तस्य पुंसः स कामस्य वित्तसुतदारादिसंपदः संततं निरन्तरं समुच्छ्रिताः वर्धमानाः सन्तु इति सकामस्य फलसिद्धि मुक्त्वा निष्कामस्यतद्विशेषणेन सूचयन्ति कीदृशीं त्वां भवापहां अविद्यादिपंचक्लेशनिषेवितताप त्रयप्रधानसंसृतिनाशकां मोक्षप्रदा मिति यावत् अनेन निष्कामः सन् यः स्तोष्यति स तु मोक्षं लभेदिति ध्वनितम् ॥ ५१ ॥

तथेत्यु दीर्य्य तत्र सा प्रपश्यतां सुपर्वणाम्
तिरोदधे सुरेश्वरी महोर्मिरं वुधा विव ॥ ५२ ॥

तथेति अथ सा सुरेश्वरी तेषां प्रार्थनां श्रुत्वा यथा भवद्भिरिष्टं तथैव भवतु इत्यु दीर्य उक्त्वा प्रपश्यता मेव तेषां सुपर्वणां देवानां मध्ये तत्रैव तिरोदधे अन्तर्हिता वभूव अत्र दृष्टान्त माह अंबुधौ महोर्मि रिव यथा समुद्रा उत्थिता महावीचिः स्वोत्थानविलासं कृत्वा पुनस्तत्रैवलीयते तथा सा भगवत्यपि चिदानंद स्वरूपात्परमात्मसमुद्रा त्प्रादुर्भूयदेव कार्यं च कृत्वा पुनस्तत्रैव तिरोदधे इत्यर्थः अयं श्रीमहालक्ष्म्या अवतार स्वाश्विनकृष्णचतुर्दश्या मभूत् तच्छुक्लाष्टम्यां महिषवधः नवम्यां देवैः सा पूजिता दशम्यां विसर्जितेति कालिकापुराणे प्रमाणिका वृत्तमिदम् प्रमाणिकाजरौलगाविति लक्षणात् ५२

तव सुमनसो ऽपि ते पथि तदा तदीयां दयां
वधं च परिपंथिनां समिति वर्णयंतो मुदा।
कुलाय मिव पक्षिभिः परिहृते मरालाद्द्रुतं
निजं निजं मथा लयं प्रययु रुज्झितं दानवैः ॥ ५३ ॥

तत इति ततः श्रीमहालक्ष्मीवरदान तिरोधानानंतरं ते देवा अथ तदीयां तस्याः श्रीभगवत्यादयां परिपंथिनां शत्रूणां च समिति युद्धे वधं त दा तथि मुदा परस्परं वर्णयंतः संतः अथ परिहृते विनष्टैः पलायिते र्वा दानवैं रुज्झितं त्यक्तं निजं निज मालयं प्रययुः कैस्त्यक्तं कं क इव परिहृतैः पत्रिभिः श्येनैः त्यक्तं निजं कुलायं नोडं मराला हंसा इव अभिघातिपरा राति प्रतयर्थि परिपंथिन इत्यमरः ॥ ५३ ॥

इत्थं जातकुतूहलेन शिशुने वेदं मया निर्मितं
व्याजेनाप्य मुना निसर्गचपले स्वान्ते निधातुं स्थितिम्।
सावद्यं निरवद्य मस्ति य दिदं तत् क्षम्यतां सूरयः
सम्यक्शास्त्रकृतश्रमो स्मि न यतो युष्मत्कृपातः कृतम् ५४

सम्प्रति कवि ग्रंथकृति मुपसंहरन् स्वाभिमतिं च निरस्यन् निर्मितिदोष क्षमापनाय सूरीन् प्रार्थयति इत्थमिति इत्थ मसुना प्रकारेण जातकुतूहलेन शिशुना इव मया लक्ष्मीनाथेन इदं लक्ष्मीकाव्यं निर्मितं शिशु घटादिकं रचयंतं कुलालं दृष्ट्वा जातकौतुकः सन् स्वयमपि मृदं गृहीत्वा रचयति परं तु तद्वन्नरचयति तथाहमपि काव्यकर्तॄन् प्रेक्षावतो दृष्ट्वा जातकौतुकः सन्नत त्सदृश मिदं रचितवान् अथ ते तु स्वयशसे रचयन्ति मया किमर्थं रचितमित्याशंक्याह किं कर्तुं अमुनापि काव्ये निर्माणरूपेण व्याजेन निसर्गतः स्वभावत एव चपले विशृंखले विषयेषु प्रवर्त्तमानत्वादतिचंचले स्वांते स्वमनसि स्थितिं निधातुं यावत्पद्यानि रचयामि ताव त्तु मना स्थिरं भविष्यतीत्य भिप्रायेण रचितं न तु यशसे इत्यर्थः तत्तस्मात् हे सूरयः लोकोत्तरवर्णननिपुणा यदि इदं काव्यं सावद्यं सदोष मस्ति यदि वानिरवद्यं निर्दोषमस्तितत् भवद्भि क्ष म्यतां ननु सदोषकृतेः क्षमापनं पंडितै र्न शक्यते कर्तुं मित्यत आह यतो ऽहं सम्यक् शास्त्रे षु कृतः श्रमः अध्ययनविचारणाभ्यासो येनतादृशो नास्मिदोषा सहिष्णुत्वं हि सर्वशास्त्रज्ञस्य कृतौ शोभते नस्वल्पज्ञस्य कृता तस्यो हि यद्यत् पदं निर्दोषं तत्वतिचित्रंवोध्य यद्यत्सदोषं मत्वा तत् प्रकृति रेवेति मुक्ताक्षंतव्य मति भावः नस्वल्पज्ञस्तुकाव्यं कर्तुं शक्तःअन्यथा शक्तिर्निपुणता लोकशास्त्र

काव्याद्यवेक्षणात् काव्यज्ञशिक्षयोभ्यासइति हेतुस्तदुच्यते इत्यालंकारिकवचन वैयर्थ्यापत्तिस्ततस्त्वयाकुतः कृतमित्याशंकापनोदाय तेषामेव महत्वं योज यति इदंतु युष्माकं कृपात एव कृतमतोपि क्षंतव्यमिति ध्वनितम् ॥ ५३ ॥

**मम वा ग्वितथा श्लथापि चे द्यपि शब्दात्स्खलिता शिशो रिव**
**नितरां करुणैकशेवधे र्जनयित्र्या भविता मुदे न किम् ॥ ५५ ।**

त्वदरीन् प्रथयित्वा तानेवोद्दिश्य ग्रंथाधिष्ठात्रीं प्रार्थयति ममेति ममेयं काव्यनिर्मितिरूपावाक् चेद्यदि वितथा प्रमाणशून्या स्ति अथवा श्लथा माधु र्यगांभीर्यादिसंदर्भरीतिराहित्ये न शिथिलास्ति यदि वा शब्दात् व्याकरणशास्त्रा त् स्खलिता अपभ्रष्टास्ति तथापि नितरां करुणाया एकशेवधिरूपाया निधि रूपाया जनयित्र्याः श्रीभगवत्याः किंमुदे प्रीत्यै न भविता प्रत्युत निर्दोष रचनातोपि महाप्रीत्यै भविष्यति इदमेव ज्ञापयितुं दृष्टांतमाह शिशोरिव यद्वत् जनयित्र्या मातुः शिशो र्वाणी यथावितथत्वादिगुणयुक्ताप्रीत्यै भवति न तथा सत्यत्वादि गुणसंपन्नेति चमत्कारातिशयो दर्शितः ॥ ५४॥

**इह शरदि शरात्खखेटचन्द्रै**
**खनग नगेन्दुभि रुन्मितेशके च ।**
**विरति मिद मगा दगाधवोधं**
**शिशिरर्त्तौ वसिते दले थ षष्ठ्याम् ॥ ५६ ॥**

इदानीं ग्रंथसमाप्तिकालीनं संवत्सरादिकं कीर्त्तयन् ग्रंथं समापयति इहे ति इहग्रंथसमाप्तिकाले विक्रमोपलक्ष्मेः विक्रमादित्यराज्ञः सकाशात् शरात् पंचभ्यः खखेटचंद्रैः शून्यनवकैर्मिते पंचाधिकनवशतसहस्रपरिच्छिन्ने शरदि- संवत्सरे व्रजति प्राप्ते सति तथा खनगनगेन्दुभिः सप्तत्यधिकसप्तशतैकसहस्रमिते शके च प्राप्ते सति खल्विति तथा शिशिरर्त्तौ माघफाल्गुणाख्यर्त्तौ तत्रापि मा घे वोध्यम् तथा असिते दले २१ कृष्णपक्षे षष्ठ्यां इदं श्रीलक्ष्मीकाव्यं विरतिं समाप्ति मगमत् कीदृशं अगाधो वोधो ज्ञानं यस्मिन् खल्विति वाक्यालंकारे इहेत्य नेना मात्य पत्तन इत्यपि वोध्यम् ॥ ५५ ॥

श्रीमाञ्शंभो स्वरणसदनीभूतहृच्छम्भुनाथो
लक्ष्मीनाथं कविपरिमृढं देशिको सूतयं मां ।
तेनो द्वीते महिष निधने गीतलक्ष्मी चरित्रे
लक्ष्मीकाव्ये विरति मगमत्सर्ग एकादशोयम् ॥ ७० ॥

श्री मानितग्रादि पूर्ववत् ॥ ६८ ॥

इतिश्रीमद्गोस्वामिवंशावतंस श्रीमच्छंभुनाथात्मज लक्ष्मीनाथ कविविरचिते लक्ष्मीकाव्ये एकादशः सर्गः ॥

इति श्री लक्ष्मीकाव्यव्याख्यायां षष्ठः सर्गः ॥ ६ ॥

---



आसीदसीममहिमन्युपमन्योरन्वयेमहातेजाः
श्री प्राणनाथनामा दासीकृतसिद्धिसमुदायः ॥ १ ॥

संपूज्यांघ्रे रवनिपतिभि स्तस्य षो ऽपिस्वगेहे
भोगासंगप्रशमितमते स्तेजस स्तस्यतेजः ।
तत्त्वज्ञाना मपि वनजुषां ना तिरिक्तं बभूव
न्यूनं किं नु स्थलकमलतो ऽलिप्तपंकं पयोजम् ॥ २ ॥

असूत सुतमद्भुतं निजसमं समंजु प्रभं
प्रथा पथिविहारिणं प्रथितपृथ्विनाथाभिधम् ।
मनोरथपृथुव्यथाव्यथितमानसा दर्शनं
बभूवु रथनाथता मिह हि यस्य पृथ्वीश्वराः ॥ ३ ॥

तन्नन्दनो मदनसूदनसादनात्मा
विभ्राजतेजितरिपुः कुलकैरवेंदुः ।
श्रीशम्भुनाथ इति नाम सुधामकांतिः
शांतिर्मति श्च न कदाचन यं जहीतः ॥ ४ ॥

तस्यात्मजोभूदथ विश्वनाथः स्वल्पायुषा धीत समस्तविद्याः
योऽद्रींद्रजाजानिनिशांत मंते सद्भक्तिसोपानपथाप्रपेदे ॥ ५ ॥
गुरुपदांवुजचुंविहृदस्मग्रहं भगवति करुणाप्तकवित्वधीः ।
तदनुजो दनुजारिवलासिनीप्रथमनाथपराभिधयाङ्कितः ॥ ६
स मां भ्राता ज्यायान् पुर मिह पुरारे र्जिगमिषं
स्त्वया काव्यं कार्य्यं सविवृतिदि दिदेशेति सदयम् ।
तदा ज्ञप्तेना स्मि न्निजरचित काव्ये सुविवृतिः
कृतेयंसंक्षिप्ता त्वरविरचनाभावपिशुना ॥७॥

इतिश्रीमद्गोस्वामिवंशावतंस श्रीमच्छंभुनाथात्मजविश्वनाथ तदनुलक्ष्मीनाथकवि विरचितेलक्ष्मीकाव्येव्याख्यायां एकाद शः सर्गस्वरमवर्णध्वंसमगात् ॥ समाप्तमिदं श्रीलक्ष्मीकाव्यं स टिप्पणम् शुभमस्तु सर्वजगतां परहितनिरता भवंतु भूतगण दोषाःप्रयांतु शांतिं सर्वत्र सुखी भवतु लोकः ॥

---

निद्राद्राघिमदूरविच्युतसुचिन्त्रातुर्य्यशौर्य्याच्युता
स्वैरोद्वर्षितसव्यकर्णकुहरी निर्गन्मलां डोद्भवौ
मध्येसिंधुविधिःस्ववंधुविधुर स्त्रावत्तुकामौमहा।
दैत्यौ वीक्ष्यपुरास्तवीतिवतयांतामीश्वरीमाश्रये ॥ १ ॥

उद्यत्संगररंगभंगमघव क्रीमत्पतंगात्मभू-
भूतेशादिदिवीशसंहतितनूजप्राज्यतेजोजनिः
तैरेवाभरणान्यथप्रहरणान्यादायभक्त्यार्पितान् ।
याजौयाऽक्तकासरासुरवधंतामीश्वरीमाश्रये ॥ २ ॥

माद्यच्छुंभनिशुंभविद्रुतमरु द्वत्र्वं प्रभृत्यादिते
याश्वोद्धुंफितसत्स्तवस्तवकजा मोदोदितावि्ष्कृतिः।
याधूम्रेक्षणचण्डमुण्डसहितौ तौ रक्तवीजान्वितौ
संख्येऽसंख्यचमूव्रतौहतवती तामीश्वरीमाश्रये ॥ ३ ॥

---

